तञ्जोद्यानपुष्पहारे प्रकीर्णकसरः 3.

॥ श्रीः ॥

श्रीमद्

# रहस्यत्रयसारसंग्रहः ॥

पण्डित

र. शेषशायि अय्यङ्गार्

Pandit R. Seshasayi Iyengar.



1929.

श्रीमते निगमान्तमहादेशिकाय नमः ॥

# श्रीरहस्यत्रयसारसंग्रहः ॥

नन्नमीमि गुरूत्तंसं श्रीनिवासाह्वयं मुनिम् ।
यदुक्त्या प्रीणितोऽकार्षीत् निर्भरं मां रमापतिः ।

रहस्यत्रयसारार्थसंग्रहोऽयं विरच्यते ।
उपायमाहिमा येन ललितं साधु बोध्यते ॥

## गुरुपरम्परासारः ।

सर्वेऽपि चेतनावन्तः सदाचार्यवत्तया संसारभयाद्विमुच्यन्ते । सोऽयमाचार्यवंशः आ भगवत्तः अनुसन्धेयः । वेदप्रदानेन शास्त्रार्थप्रवर्तनेन च भगवान् लक्ष्मीः विष्वक्सेनश्चाचार्यकोटिमधिशेरते । शठकोपमुनिस्तु वेदान्तसंप्रदायप्रवर्तनेन भगवद्गुणानुभवपरायणस्य श्रीनाथमुनेः योगदशायामाविर्भूय विशिष्य हिततमोपदेशेन च आचार्यो बभूव । नाथमुनेः पुत्र ईश्वरभट्टः तस्य पुत्लो यामुनेयः (ஆளவந்தார்) तस्य पुत्लः சொட்டநம்பி तस्य पुत्रः என்னாச்சான் तस्य चतुर्षु पुत्रेष्वन्यतमः பிள்ளையப்பர் तस्य पुत्रः தோழப்பர் तस्य पुत्लिकाद्वयमिति शारीरको वंशः ।

विद्यावंशस्त्वेवम्—

नाथमुनेः पुण्डरीकाक्षः तस्य श्रीराममिश्रः तस्य यामुनेयः तस्य महापूर्णः तस्य श्रीमद्रामानुजाचार्यः— इति ॥

भक्तितारतम्यानुरोधेनैव कश्चिद्गुरुं प्रकाशयति कश्चिन्न । भगवतीव गुरावपि परा भक्तिः सर्वमपेक्षितार्थं प्रकाशयेदिति कठजाबालश्रुत्यादौ सञ्जयादिवृत्तान्तेषु च प्रसिद्धम् ।

उद्यानपत्तिका-अनुबन्धः ।

अनेवंभूतानां न ज्ञानप्रादुर्भावः । अतिशयितगुणानामन्तेवासिना जवाद्ध्यात्मशास्त्रप्रकाशनं नाचार्यस्य निष्ठामूनयति । अविचार्य त्वरया समुपदिशन्नाचार्यः इन्द्रस्य उपदेशेन विस्मृतात्मविद्यः ततः स्वशिष्यभूतान्नारदाद्गृहीतब्यात्मविद्यश्चतुर्मुख इव स्वनिष्ठातश्च्यवते । अतो गुरुप्रकाशनं आर्हन्तीरहितान्तेवासिभ्यो मन्त्रसंरक्षणं च अवश्यकरणीयम् । मन्त्रोपदेशादौ आचार्यपरम्परा विशिष्यानुसन्धेया भवति ।

## 2 आचार्यकरणीयम् ।

इत्थं परमाचार्यभूतं सर्वेश्वरमारभ्य सत्संप्रदायतः समागतान् सिद्धैस्तन्यवद्विजातीयैरविज्ञातरसान् रहस्यत्रयार्थान् सङ्गृह्य साधुतरं स्वयमनुसन्दधानाः श्रद्धाद्यन्विताय परापवादाविरताय विविक्तशीलाय विधिप्रियाय विजानते शिष्याय यथाशास्त्रं तत्त्वमुपदिशन्तः, अनृतवादिभ्यः शठेभ्यः परोपतापिभ्यः अजितेन्द्रियेभ्यः पण्डितम्मन्येभ्यः अविचक्षणविमोहकवादकुतूहलिभ्यः असद्भ्यः तत्त्वत्रयरत्नं संरक्षन्तः, सन्मार्गप्रच्यावकमात्मसम्माननमर्थं डम्भं लोकानुसरणं च दूरीकुर्वन्त आचार्याः शरण्यानुग्रहनिदानभूतसात्त्विकत्वास्तिक्यादिगुणवतः दैवप्रकृतीन् यथाविधि मासत्रयं परीक्ष्यान्तेवासितापदे स्थापयन्तः, डम्भदर्पादिदोषवतः आसुरप्रकृतीन् बहिष्कुर्वन्तःस्वयं निस्पृहाः, एवं यथारुचि सङ्गृह्य शिष्येभ्य उपदिशेयुः—यथा जीवात्मानो हि देहेन्द्रियादिव्यतिरिक्ता नित्याः । परमात्मा हि चेतनाचेतनान्तर्यामी सर्वशरीरकः सर्वशेषी । विना च परमात्मानं नान्योऽस्ति कश्चन रक्षकः । अनादिकालमारभ्य संसरतां इतः परं गर्भवासादिक्लेशाभावाय भगवतश्चरणावाश्रयणीयौ । आचार्यप्रसादलब्धयोः श्रीशचरणयोः गुरुपरम्परासमधिगतेन द्वयेन आत्मात्मीयसमर्पणमेव हि हितम् । सदाचार्यकटाक्षलब्धः स भगवान् न कदाऽप्याश्रितान् जह्यादिति महता विश्वासेन यावज्जीवं निरपराधमनुकूलमुत्तरं कृत्यं चावश्यकमिति ।

उद्यानपत्रिका-

## 3. शिष्यकरणीयम्।

इत्थं तत्त्वान्यखिलानि अन्तर्गृहं महानिधिमिव प्रदर्शयतां परमोपकारिणामाचार्याणां विषये शिष्यस्य कृतज्ञतानुसन्धानमद्रोहाचरणं च विदधच्छास्त्रं सविभूतिकस्य भगवतो निग्रहं हितवादिप्रह्लादविभीषणादिप्रतिकूलहिरण्यरावणादिवदस्य दण्ड्यतां च निवर्तयितुमेव प्रवृत्तम्। शरीरस्यार्थस्य प्राणानां च दक्षिणात्वेन यदाचार्याय निवेदनं विधीयते, तदिदं प्रणिपाताभिवादनादिवत् कर्तव्यं यत्किञ्चन गर्भीकरोति। देववदाचार्ये वर्तितव्यमित्यापस्तम्बादिवचनमपि शास्त्रचक्षुषोऽस्यानन्धतां भगवदनुभवमिव सदाचार्यकैङ्कर्यानुभवमपि संवर्धयितुमेवाशेते। नैतैः प्रमाणैः निस्पृहमुपदिशतामाचार्याणां विषये कश्चन प्रत्युपकारोऽवबोध्यते। अत एव ब्रह्मविद्याप्रदानस्य प्रतिप्रदानं नेति वचनजातमुपपद्यते।

एवंभूतस्यान्तेवासिनः इमान्यवश्यकरणीयानि भवन्ति—यद्विपरीतानुष्ठानादिभिः श्रुतं कपालसम्बन्धेन क्षीरमिव सर्वानुपजीव्यं न करोति; यच्च काकवाशितमिव श्रुतमर्थज्ञानमात्रप्रयोजनकं न कल्पयति; यच्च श्रुतमवबोध्य लब्धेन वित्तेन कुक्षिमापूरयन् वान्ताशितामात्मनो न निष्पादयति; यच्च श्रुतं गणिकालङ्कारमिव स्वप्रयोजनपदान्न दूरीभावयति; यच्च अनुलेपनसुगन्धिद्रव्यवच्छ्रुतं मूल्यानुगुणं न विक्रीणीते; यच्च पृथुककणप्रकरणमिवार्हान्यविचारमन्तरेण समुदायोद्देश्यकं न करोति यच्च श्रुतं वानरहस्ते मालामिवापात्रे नायोजयतीति।

किंच जनुषान्धकल्पमात्मानं सूरिपार्षदर्हं परिकल्पयत आचार्यस्य तुल्यः प्रत्युपकारो नैवेति जानन् कुलग्रामादिना व्यपदेशं विरहयन् भगवता श्लाघितमाचार्यसम्बन्धव्यपदेशमात्मनः प्रकाशयन् सदाचार्यसम्बन्धजनितमुपकारमविस्मरन्नासीत।

उद्यानपत्रिका।

इत्थमवगतं रहस्यत्रयं सति पात्रे विनिवेशयितुमीहमानः आत्मीयगुरुपरम्परां प्रकाशयन् तत्र कृतज्ञतां तदीयार्थप्राशस्त्यं चावबोधयन्नुपदिशेत् ।

यश्च उत्संप्रदायं स्वयमेव पुस्तकं विलोक्य अथवाऽऽत्मानं प्रच्छाद्य गृहीतमर्थं परानवबोधयति स किल प्रमुषिताभरणधारीव सर्वेभ्यो विज्ञातृभ्यो बिभीयात् । प्रत्यवेयाच्च ।

आचार्यसकाशादपि नियममतिलङ्घ्य गृह्णानः कालपुरुषदानप्रतिग्रहप्राप्तभूषण इव सर्वैः कुत्सनीयो भवति,अनर्थकारी च ।

गुरुपरम्पराप्रकाशनाभावे हि शिफारहिततृणवदस्थिरत्वेनाप्रामाण्यशङ्कास्पदतया अनादरविषयः उपदेशः स्यात् । गुरूणामप्रकाशनं चापचारमध्ये पठ्यते । तदप्रकाशने च ज्ञानवैशद्यपूर्वकभगवदनुभवसम्पत् सत्तानुवृत्तिहेतुशेषत्वानुसन्धानपूर्वकस्वनिष्ठारूपमायुश्च नश्यतः । आचार्यकृतशास्त्रीयोपदेशस्य विरोधमुपपादयन्नन्तेवासी विप्रलम्भकः पापिष्ठश्च भवति । सच्छिष्येभ्यस्तत्त्वमनुपदिशन्नाचार्यः लुब्धो भगवन्नियोगातिक्रमी च विज्ञायते । दीपधारी सेवकः नाथेन कार्यान्तरे विनियुज्यमानः तुल्येऽन्यत्र दीपं संक्रमय्य किलापगच्छति । एवं पात्रान्तरे सदुपदेशं निदधानः अविरुद्धं स्वतो भातस्यार्थस्य सदाचार्यमूलकतां प्रकाशयन् सर्वादरणीयतत्त्वार्थः कृतज्ञ इति सात्त्विकैरनुगृह्यते । सत्यवादीति उपनिषदा परमपुरुषतुल्यमुपश्लोक्यते च । एवंभूतान्तेवासिजनलाभेन स्वकृषेः फलवत्त्वं परिचिन्तयन्नाचार्यः कृतार्थो भवति ।



## 1. उपोद्घातः ।

श्रियः पत्युः कौस्तुभस्थानीयो हृदयङ्गमश्शेषभूतो जीवात्मा परमे पदे नागपर्यङ्कमध्यासीनस्य श्रीमतो नारायणस्य सर्वविधकैङ्कर्याणि नित्यसूरिभिः साकमनुविधातुं योग्यतावानपि अनादिमायया प्राकृते महागर्ते पातितः, शैशवावस्थायामेव केनापि हतविधिना मृगयासक्तस्य पितुः सकाशात्प्रच्यावितः पक्कणं प्रापितः तत्रत्यैः स्वानुगुणं परिपोषितः स्वस्वरूपानर्हवेषभाषणाचारादीननुतिष्ठन्राजकुमार इव निष्प्रभो दीनतरश्च भवति । तदनु स यथा तत्त्ववेदिभिः कैश्चन धार्मिकैरुपदिष्टस्ववृत्तः दृष्टादृष्टसंस्कारैरुत्कृष्टभोगतदुपायादिषु योग्यतां प्रापितः पितुः समीपं गन्तुमहिमानः तैरेव तत्र प्रापितः स्वोचितपुरुषार्थं लभते तथैवायमपि याद्दच्छिकसुकृताधीनसमागमैराचार्यैः भगवच्छेषत्वमवगमितः महितेनोपायेन निरतिशयभोग्यं भगवत्कैङ्कर्यमवाप्य मोदते ।

एवं वर्तमानस्यात्मनः ईशेशितव्यस्वरूपस्वभावसंबन्धाः, भोगापवर्गौ, त्याज्योपादेयभूता अनयोरुपायविशेषाः, गतिविशेषाः, मोक्षविरोधिनश्चेतीमे अर्था ज्ञातव्याः । एतेऽर्थाः सारतमरहस्यत्रये प्रतितन्त्रसारोद्धारक्रमेण संगृहीता वर्तन्ते ।

## 2. सारनिष्कर्षः ।

परमपुरुषार्थतदुपायानां प्रत्यक्षागम्यतया शब्द एव प्रमाणम् । तत्र बाह्यकुदृष्टिशास्त्राण्यत्यन्तासाराणि । वेदेऽप्यैहिकफलसाधनकर्मप्रतिपादको भागः अल्पसारः । आमुष्मिकस्वर्गादिफलसाधनभागः सारः । ततोऽप्यात्मप्राप्तितत्साधनप्रतिपादको भागः सारतरः । ततोऽपि परमात्मतत्प्राप्तितदुपायप्रकाशको भागः सारतमः । तत्रापि प्रधानप्रतितन्त्रेण तत्त्वहितसंग्राहको भागः अत्यन्तसारतमः । तत्राष्टाक्षरस्य सर्वार्थप्रदानचणतया, चरमश्लोकस्य सर्वफलसाधकोपायविशेषविधायकतया, द्वयस्य सकृदुच्चारणमात्रेण कृतकृत्यतासंपादनदक्षतया च इदं रहस्यत्रयं सारतमं मुमुक्षुभिः समाद्रियेत । उद्यानपत्रिका ।

## 3. प्रधानप्रतितन्त्रम् ।

प्रतितन्त्रं नाम इतरसिद्धान्त्यनङ्गीकृता एकतरसिद्धान्त्यसाधारणीभूता अर्थाः । तादृशाः प्रधानभूता अस्माकं मते चेतनाचेतनयोरीश्वरस्य च शरीरात्मभावसंबन्धादयः ।

तत्र भगवतः शरीरित्वं नियतचेतनाचेतनद्रव्यधारकत्वनियन्तृत्वशेषित्वरूपम् । चेतनाचेतनयोः शरीरत्वं नियतेश्वरधार्यत्वनियाम्यत्वशेषत्वरूपम् । धारकत्वं नियन्तृत्वं च स्वरूपेण संकल्पेन च यथार्हं तत्सत्तास्थितिप्रवृत्तीनां प्रयोजकत्वरूपम् । ईश्वरः किल स्वरूपनिरूपकधर्माणामिव निरूपितस्वरूपविशेषणगुणानामिव च स्वव्यतिरिक्तसमस्तद्रव्याणां अव्यवधानतः स्वरूपेणाधारो वर्तते । तत्तद्द्रव्याश्रितगुणानां तत्तद्द्रव्यद्वाराऽऽधारो भवति । जीवधृतानां शरीराणां जीवद्वाराऽऽधार इति केचित् । अपरे पुनः जीवद्वारा स्वरूपेण चाधार इत्यङ्गीकुर्वन्ति । सर्वस्यापि ईश्वरापृथक्सिद्धविशेषणतया अदसीयाः सत्तादय आश्रयसत्ताधीना भवन्ति । अनित्यवस्तुसत्ता अनित्येच्छयोत्पद्यते । नित्यवस्तुसत्ता नित्येच्छासिद्धा वर्तते । सत्तानुवृत्तिलक्षणा स्थितिरपीश्वरेच्छाधीनेति सर्वस्यापि सङ्कल्पाश्रितत्वमुपपद्यते । गुरुद्रव्याणां सङ्कल्पधृतत्वकथनं देशविशेषे पतनाभावतात्पर्येण प्रवृत्तम् । इत्थमिच्छाधीनसत्तास्थितिप्रवृत्तीनां वस्तूनां परमात्मस्वरूपाश्रितत्वमिच्छैव व्यवस्थापयति । इत्थं च सर्वाणि वस्तूनि भगवत्स्वरूपाश्रितानि तत्सङ्कल्पाश्रितानि च सन्ति । लोकेऽपि शरीरस्य स्वरूपेण सङ्कल्पेन च शरीर्याश्रितत्वं पश्यामः । जीवसत्तासमव्याप्तत्वात् शरीरस्य स्वरूपाश्रितत्वम् । एतच्च सङ्कल्परहितसुषुप्त्याद्यवस्थासु स्फुटम् । जागरादिषु सङ्कल्पेन पतनप्रतिबन्धनात् सङ्कल्पाश्रितत्वम् । स्वरूपाश्रिते वस्तुनि आधेयतया सङ्कल्पाधीने च नियाम्यतया व्यपदेशो भवति । अत्र भगवतश्शेषित्वं नाम पारार्थ्यैकस्वभावानां स्वप्रयोजनतया उपादानादतिशयभाक्त्वमेव । इत्थमाधाराधेयभावेन तदपृथक्सिद्धस्वरूपलाभः शेषशेषिभावेन

उद्यानपालिका ।

अनुरूपपुरुषार्थरुचिः नियन्तृनियाम्यभावेन निरपेक्षोपायविज्ञानं चास्य फलमिति । एवं च जीवः अनन्याधारः अनन्योपायः अनन्यप्रयोजनश्चेति लभ्यते । नारायणशब्दे तत्पुरुषबहुव्रीहिसमासाभ्यामनन्याधारत्वादिविशिष्टस्वरूपलाभः । प्रणवनमःपदाभ्यां अनन्यशरणत्वानन्यप्रयोजनत्वयोर्लाभः फलतीति । प्रपत्त्यनुष्ठानप्रकाशके द्वयेऽपि पूर्वखण्डेन अनन्यशरणत्वं उत्तरखण्डेनानन्यप्रयोजनत्वं उभाभ्यामनन्याधारत्वं च प्रकाश्यते । एवं चरमश्लोकेऽपि स्वयं ऊह्यम् । ईश्वरगतं शेषित्वं स्वामित्वरूपे विशेषे, स्वगत शेषत्वं दासत्वरूपे विशेषे च पर्यवसाय्यानुसन्धानं सांप्रतम् । इत्थं च शेषस्य कैङ्कर्यं शेषिणोऽतिशयलाभश्च पुरुषार्थौ सिद्ध्यतः ।

## 4. अर्थपञ्चकम् ।

आधाराधेयभावादिना विवक्षितं प्राप्यप्राप्त्रोः स्वरूपं, उपायः फलं प्राप्तिविरोधीति अर्थानां पञ्चकं अवश्यं ज्ञातव्यम् । चेतनाचेतनयोः ब्रह्मणश्च शरीरशरीरिभावसम्बन्धमपि षष्ठं विज्ञेयं केचन वदन्ति ।

प्राप्यस्य स्वरूपं अकारनारायणादिशब्दतः प्रतीयमानं सत्यज्ञानादिस्वरूपनिरूपकधर्मविशिष्टमपि बहुप्रमाणानुरोधेन श्रीविशिष्टं समस्तकल्याणगुणयुक्तं अप्राकृतदिव्यमङ्गलविग्रहविशिष्टं भूषणायुधादिविराजितं च अनुसन्धेयम् । तदिदं ब्रह्मस्वरूपं परव्यूहविभवहार्दार्चारूपतः पञ्चप्रकारं लीलाभोगविभूतिविशिष्टं च । आनुकूल्यस्य तुल्यत्वेऽपि रसवैषम्येण लोकवत् विभूत्याः लीलार्थत्वं भोगार्थत्वं चोपपद्यते ।

प्राप्ता च प्रत्यगात्मा बद्धमुक्तनित्यभेदेन त्रिधा । अनादिकर्मप्रवाहान्तर्गता बद्धाः । शास्त्रचोदितोपायविशेषतो निवृत्तसंसारा निरतिशयज्ञानानन्दा मुक्ताः । नित्यसिद्धज्ञानानन्दा ईश्वरतुल्या नित्याः । अमीषां ज्ञानानन्दामलत्वादयः स्वरूपतोऽणुत्वं च साधारणो धर्मः । यथायोग्यं नमआदिषु पदेषु प्रत्यगात्मस्वरूपमनुसन्धेयम् । उद्यानपत्रिका ।

उपायस्वरूपमपि सपरिकरमुपरिष्टात् विस्तरेण प्रतिपादयिष्यते । प्रपद्ये व्रजेत्यादौ च उपायोऽनुसन्धातव्यः ।

फलस्वरूपमपि परस्ताद्विशदीभविष्यति । तच्च चतुर्थीनमआदिषु अनुसन्धेयम् ।

प्राप्तिविरोधी नाम, अविद्याकर्मवासनादिरूपमोक्षप्रतिबन्धकवर्गः । तत्राज्ञातिलङ्घनजनितो भगवन्निग्रहस्तु सर्वनिदानभूतः । स हि जीवानां विचित्रं प्रकृतिसंसर्गं, तिर्यगादिदशां, मनुष्यदशायां बाह्यकुदृष्टिमतप्रवेशं, तत्र तत्त्वाज्ञानादिमूलकाज्ञातिलङ्घनादिरुचिपरम्परां, देवतान्तरप्रावण्यं, नामाद्यचेतनोपासनासक्तिं, केवलात्मानुभवकुतूहलं, भगवदनुभवान्तरायभूताष्टैश्वर्यादिसिद्ध्यौन्मुख्यं, वस्वादिपदप्राप्तिरूपं विळम्बं च जनयति । एकेनापि विरोधिना जातेऽन्तराये नैष संसृतिबन्धं निश्शेषतो हातुं प्रभवति । प्रपत्तिव्यतिरिक्ताः कर्मयोगादयो हि विळम्बेन जन्मान्तरादिष्वेव फलमुपजनयेयुः । सर्वथा व्यथयतो भगवन्निग्रहस्य निश्शेषनिवर्तिनी प्रपत्तिरेकैवेति दृश्यते । एवंविधविरोधिनिवृत्तिः नमआदौ अनुसन्धेया ।

## 5. तत्त्वत्रयचिन्तनम् ।

अवश्यं विज्ञेये अर्थानां पञ्चके षट्के वा तत्त्वहितपुमर्थरूपतत्त्वत्रयविवेचनमेव मुख्यम् । यत इदमेव प्रकृत्यात्मभ्रमं स्वतन्त्रात्मभ्रममनीश्वरवादरुचिं चापाकरोति । तत्र अचेतनानि त्रिगुणकालशुद्धसत्त्वभेदेन त्रिधा । चेतना अपि बद्धमुक्तनित्यभेदेन त्रिविधाः । एतदुभयशरीरको भगवानिति यथाप्रमाणमवगम्यते । एतादृशीं च तत्त्वरीतिं प्राञ्चः संगृह्य, स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्' इत्याहुः ।

स्वासाधारणधर्मनिरूप्यो धर्मी स्वरूपम् । कालान्तरानुवृत्तिः स्थितिः । सेयं नित्येषु नित्या । अन्यत्र भगवत्सङ्कल्पमनुसरति । व्यापारविशेषः प्रवृत्तिः । सा च प्रतिवस्तु प्रमाणप्रतिनियता वर्तते । प्रमाणानि किल वस्तूनां स्वरूपं तन्निरूपकान् धर्मान् निरूपितस्वरूपविशेषणानि उपानपत्रिका ।

व्यापारांश्च प्रदर्शयन्ति । प्रमाणेन च स्वरूपं स्वरूपनिरूपकधर्मविशिष्टमेवावबोध्यते । तेन विना तत्स्वरूपं निरूपयितुं न शक्यते । विहाय स्वरूपनिरूपकं धर्मं जिज्ञास्यमानः शशविषाणसदृशः स्यात् । अतो जीवः ज्ञानत्वानन्दत्वामलत्वाणुत्वरूपासाधारणधर्मैरेव निरूप्यते । भगवन्निरूपितशेषत्वस्य सम्बन्धरूपतया सम्बन्धिनिरूपणं विना न तन्निरूपणार्हमिति शेषत्वस्य निरूपितस्वरूपविशेषणत्वमेव युक्तमिति सांप्रदायिकाः ।

केचित्तु अणुत्वविशिष्टचेतनत्वस्यैव स्वतःशेषत्वविशिष्टचेतनत्वस्यापि स्वरूपनिरूपकत्वं लक्षणविधया संभवतीति वदन्ति ।

एवं निरुपाधिकशेषित्वादिकमपि ईश्वरलक्षणमङ्गीक्रियते । जीवानामीश्वरस्य च चेतनत्वप्रत्यक्त्वे साधारणे । चेतनत्वं ज्ञानाश्रयत्वम् । प्रत्यक्त्वं स्वस्मै भासमानत्वम् । तदानीं धर्मभूतज्ञाननिरपेक्षमहमिति स्वरूपेण प्रकाशते ।

ईश्वरेऽतिव्याप्तिवारणाय जीवलक्षणे स्वतःशेषत्वादिकं निवेशितम् । इदं शेषत्वं भागवतशेषत्वपर्यन्तमभिवर्धत इति वक्ष्यते । चेतनानां प्रवृत्तिः पराधीना परार्था च । भगवांश्च स्वभोक्तृत्वनिर्वाहायामीषां कर्तृत्वादिकं वितरति । बद्धाश्चाविद्याकर्मवासनारुचिप्रकृतिसंबन्धयोगितया इतरेभ्यो भिन्नाः । ते च भगवद्दत्तं करणकळेबरादिकं धर्मिस्वरूपेण धर्मभूतज्ञानेन च धरन्ति । धर्मिस्वरूपेण धरणं सत्ताप्रयोजकं । धर्मभूतज्ञानेन धरणं तु पुरुषार्थतदुपायानुष्ठानादिप्रयोजकम् । जीवेन त्यज्यमानाः विशीर्णाश्च देहादयः उपादानद्रव्यद्वारा भगवतः शरीरं भवन्ति । बद्धानां स्थितिभेदः प्रवृत्तिभेदश्च यावन्मोक्षं संसारसम्बन्धात् पुण्यपापानुभयरूपाणां त्रिविधप्रवृत्तीनां सम्बन्धाच्च भवति ।

प्रतिबन्धकनिवृत्त्या आविर्भूतस्वरूपत्वमेव मुक्तानां तदितरभेदः । तेषां स्थितिभेदश्च पूर्वावधिविशिष्टस्वरूपाविर्भावस्य उत्तरावधिराहित्यमेव । अन्योन्यं स्थितिभेदश्च मुक्तेषु कालाल्पत्वाधिक्यादिना भवति । तेषां प्रवृत्तिभेदः

उद्यानपत्रिका ।

चिरेण प्रच्युतानां संप्रति समधिगतानां भगवदनुभवजनितकैङ्कर्याणां विशेषैरवगन्तव्यः । अनाद्याविर्भूतस्वरूपत्वविशिष्टपारतन्त्र्यं नित्यानां तदितरभेदः । स्थितिभेदश्चानाद्यनुवृत्तशेषितत्त्वानुभवात् भवति । एतादृशानुभवस्य सर्वनित्यसाधारण्येन न परस्परस्थितिभेदः शक्यते वक्तुम् । प्रवृत्तिभेदश्चानादिप्रवाहनित्यकैङ्कर्यविशेषैरवगन्तव्यः । अनन्तगरुडादिप्रतिनियतकैङ्कर्येष्विच्छानुदयात् एकानुष्ठितकैङ्कर्यसन्दर्शनेन समानफलवत्त्वाच्च न नित्यमुक्तयोः कैङ्कर्यवत्त्वहानिः । अत्र चेतनशब्देन धर्मिस्वरूपज्ञानमिव तद्विशेषणीभूतं धर्मभूतज्ञानमपि विवक्षितम् । विषयप्रकाशनवेळायां स्वाश्रयस्य स्वयंप्रकाशत्वमस्य स्वरूपभेदः । इदमीश्वरस्य नित्यानां च नित्यविभु । बद्धस्य कर्मानुरूपबहुविधसङ्कोचविशिष्टम् । मुक्तस्य नैजविकासेन उत्तरकालं यावद्विभु ।

अस्य प्रवृत्तिर्नाम विषयप्रकाशनं, प्रयत्नावस्थायां शरीरादिप्रेरणं, बद्धदशायां सङ्कोचविकासौ भोगावस्थाप्राप्तिश्च । भोगो नाम अनुकूलतया प्रतिकूलतया वा कस्यचिदनुभवः । यद्यपीश्वरविभूतीनामानुकूल्यमेव स्वभावः । तथैव मुक्ता नित्याश्चानुभवन्ति । तथाऽपि संसारिणां तत्तत्कर्मानुरूपभगवत्सङ्कल्पेन कालपुरुषदेशोपाधिभिरनुकूलं प्रतिकूलमुदासीनमितीमे विभागा भवन्ति । न तु वस्तुस्वभावसिद्धाः । एतादृशकर्मफलानुभवे परतन्त्रचेतनत्वं स्वरूपयोग्यता भवति । सापराधत्वं च सहकारियोग्यता । नित्यमुक्तयोः सत्यामपि स्वरूपयोग्यतायां सापराधत्वरूपसहकारियोग्यताविरहात् नानुभवः । ईश्वरस्य योग्यताद्वयमपि नास्ति । यतः स न परतन्त्रः । नाप्यपराधवान् । जीवानां धर्मिस्वरूपज्ञानप्रकाशः कदाऽपि न सङ्कोचविकासौ भजति । सर्वेषां धर्मभूतं ज्ञानं विषयप्रकाशनवेळायां स्वाश्रयस्य स्वयंप्रकाशम् । ज्ञानत्वं स्वयंप्रकाशत्वं च धर्मधर्मिभूतज्ञानयोः साधारणम् । धर्मभूतस्य विषयित्वमसाधारणम् । धर्मिणः प्रत्यक्त्वमसाधारणम् । ज्ञानत्वं नाम स्वस्य वा परस्य वा कस्यचित् व्यवहारानुगुण्यसंपादक-

त्वम् । स्वयंप्रकाशत्वं नाम ज्ञानान्तरानपेक्षप्रकाशवत्त्वम् । विषयित्वं नाम स्वेतरनिष्ठविषयतानिरूपकत्वम् । प्रत्यक्त्वं नाम स्वस्मै भासमानत्वम् । स्वप्रकाशफलित्वमिति यावत् । यस्य कस्यचिद्वस्तुनः प्रकाशं प्रति फलित्वमित्यस्मिन् सामान्याकारे स्वप्रकाशं प्रति स्वयं फलित्वमित्येवं विशेषिते प्रत्यक्त्वं भवति । यद्वस्तु एतद्विशेषरहितं तस्येदं सामान्यं तद्यातं चेतनत्वं च न भवति । एवं धर्मधर्मिणोः सत्यपि स्वयंप्रकाशत्वे नित्यत्वादिधर्मविशेषविशिष्टतया ज्ञानान्तरवेद्यत्वमपि बोध्यम् । स्वीयधर्मभूतज्ञानानां विभिन्नत्वे प्रसरभेदप्रयोज्यं भवति ।

अचेतनत्वं नाम ज्ञानाश्रयताशून्यत्वम् । परस्मै भासमानत्वं नाम स्वप्रकाशं प्रति स्वस्य फलित्वाभावः । इदं द्वयं धर्मभूतज्ञानादेरपि तुल्यम् । त्रिविधाचेतनेषु प्रकृतिः कालश्च जडौ । केचित्तु शुद्धसत्त्वमपि जडं वदन्ति । जडत्वं नाम स्वयंप्रकाशतारहितत्वम् । भगवच्छास्त्रपरामर्शकास्तु शुद्धसत्त्वस्य ज्ञानात्मकतया तत् स्वयंप्रकाशमङ्गीकुर्वन्ति । यथा स्वरूपज्ञानं स्वस्यैव स्वयंप्रकाशं यथा वा धर्मभूतज्ञानं स्वाश्रयस्यैव स्वयंप्रकाशमित्यङ्गीक्रियते तथैव शुद्धसत्त्वगतं स्वयंप्रकाशत्वं संसारिभिन्नविषयकमिति न प्रत्यक्षतापादनरूपो दोषः । यथा धर्मभूतज्ञानविषयस्यापि दिव्यात्मस्वरूपस्य स्वयंप्रकाशत्वं स्वीकृतं तथा ईश्वरीयधर्मभूतज्ञानविषयस्यापि शुद्धसत्त्वस्य स्वयंप्रकाशत्वमङ्गीक्रियत इति न दोषः ।

एवमेव नित्यानामपि शुद्धसत्त्वं स्वयं प्रकाशते । मुक्तानामपि तदवस्थायां तत्स्वयमेव प्रकाशते । बद्धानां तु *धर्मभूतज्ञानगतस्वप्रकाशनशक्तिरिव शुद्धसत्त्वगतस्वप्रकाशनशक्तिरपि कर्मविशेषेण प्रतिबध्यत इति सर्वं सुस्थम् । एवमवस्थान्तरापत्तिः विकारिद्रव्याणां न विरुद्ध्यते । अतश्च प्रमाणसिद्धोऽर्थो न युक्तिभिर्विचाल्यः । उपचाराश्रयणेनान्यथा निर्वाहस्तु दिव्यात्मस्वरूपादिष्वपि ज्ञानादिशब्दानामन्यपरत्वकल्पनेन विपरीतफलः स्यात् । यथा धर्मधर्मिभूतयोः ज्ञानत्वे तुल्येऽपि वैषम्यम् तथा शुद्धसत्त्वस्य स्वयं-

*विषयाप्रकाशदशायां उद्यानपत्रिका ।

प्रकाशत्वे सत्यपि रूपरसादयः पृथिव्यादिविभागः परिणामविशेषाश्च नानुपपन्ना भवन्ति । इत्थं स्वयंप्रकाशशुद्धसत्त्वस्य ज्ञातृत्वावैधुर्येणाचेतनमध्ये गणनमुपपद्यते । अचेतनानां प्रवृत्तयश्च ईश्वरसङ्कल्पानुरोधेन विचित्रपरिणामादयः ।

तत्र प्रकृतेः स्वरूपभेदः गुणत्रयाश्रयत्वम् । सततपरिणामिन्याः अस्याः गुणत्रयसाम्ये महाप्रळयः, वैषम्ये सृष्टिस्थिती । गुणवैषम्यवत्सु प्रदेशेषु महदादयो विकारा भवन्ति । विकृताविकृतोभयप्रदेशानुरोधेन प्रकृतिः, महान्, अहङ्कारः, पञ्च तन्मात्राः, पञ्च भूतानि, एकादश इन्द्रियाणीति तत्त्वानि चतुर्विंशतितया गण्यन्ते । विवक्षावैलक्षण्येन तत्त्वानां न्यूनाधिकत्वमप्युपपद्यते । अमूनि तत्त्वानि तदधिष्ठानदेवताश्च उपासकैर्विशिष्य विज्ञेयानि । अस्माकं तु आत्मभिन्नत्वज्ञानमात्राय एतेषां विज्ञानम् । एतानि तत्त्वानि भगवतः अस्त्रभूषादिरूपेण वर्तन्ते । तद्यथा—

**याति श्रीवत्सभावं प्रकृतिरपि मनश्चक्रतां कौस्तुभत्वं**
**जीवोऽहङ्कारयुग्मं भजति जलजताशार्ङ्गभावौ मुरारेः ।**
**साकं भूतैश्च मात्रा दधति च तुळसीदामभावं महांस्तु**
**प्राप्तः कौमोदकीत्वं वपुषि भगवतो राजते तत्त्वगुम्फः ॥**

अमीषामन्योन्यं स्वरूपभेदः तत्तल्लक्षणेनैवावगन्तव्यः । प्रकृतेस्तत्कार्यभूतानां त्रयोविंशतेस्तत्त्वानां च स्थितिभेदाः यथाप्रमाणं अनुसन्धेयाः ।

मूलप्रकृतेरानन्त्यञ्च नित्यविभूत्यनवच्छिन्नप्रदेशतो विज्ञेयम् । प्रकृतेः प्रवृत्तिभेदो नाम चेतनीयभोगापवर्गार्थं भगवल्लीलारसार्थं च समविषमपरिणामसन्ततिं प्राप्य देहेन्द्रियादिरूपेण व्यापारविशेषाणां निष्पादनम् । अयं प्रवृत्तिभेदः बद्धानां रजस्तमोद्वारा तत्त्वज्ञानं पिधाय भोगार्थं विपरीतज्ञानं जनयति । एष एव सत्त्वविवर्धनद्वारा अपवर्गार्थं तत्त्वानि यथावत्प्रकाशयति । इदं सर्वं भगवतो लीलारसमापूरयति । शुद्धसत्त्वस्य स्वरूपभेदो नाम रजस्तमःस्पर्शरहितकेवलसत्त्वरूपत्वम् । एतस्य स्थितिभेदः नित्येषु मण्टपगोपुरादिषु, भगवतो नित्यानां च विग्रहविशेषेषु नित्यो भवति । नित्यमुक्त-

उद्यानपत्रिका ।

योरीश्वरस्य चानित्येच्छास्वीकृतेषु विग्रहादिषु अनित्यभूतः । प्रवृत्तिभेदश्चास्य इच्छानुरूपपरिणामादिभिः शेषिणो भोगोपकरणीभवनं शेषभूतानां कैङ्कर्योपकरणीभवनं च । जडत्वे सति विभुत्वं कालस्य स्वरूपभेदः । स्थितिभेदश्च कलाकाष्ठादिविभागेन सृष्ट्याद्युपकरणीभवनाद् द्रष्टव्यः ।

एतानि द्रव्याणि स्वरूपतो नित्यानि । नामान्तरभजनार्हावस्थाविशेषवत्तापुरस्कारेण कानिचिदानित्यानि कथ्यन्ते । पूर्वप्रध्वस्तावस्थासजातीयावस्थाया एव उत्तरोत्तरमागमनेन प्रवाहनित्यानीति कथ्यन्ते । पदार्थस्वरूपस्थितिप्रवृत्तिभेदानामीश्वराधीनत्वं नाम भगवत्सत्तासङ्कल्पानधीनसत्तादियोगित्वाभावः । अतः सर्वपदार्थानां स्वभावसिद्धानुकूल्यमीश्वरायत्तं भवति । ततश्चामी ईश्वरस्य नित्यानां मुक्तानां चानुकूला एव । बद्धानां तु कर्मानुगुणं पुरुषार्थभेदेन कालभेदेन चामी प्रतिकूला अल्पानुकूलाश्च भवन्ति । आत्मस्वरूपन्तु बद्धानामपि भगवदिच्छया अनुकूलमेव भवति । एतादृशात्मसम्बन्धेन खलु तदभेदभ्रमवशात् कर्मवशाच्च शरीरे मूढानामानुकूल्यं भासते । इदं च शरीरं कर्मोपाधिकप्रातिकूल्यवत्तया मुमुक्षुभिस्त्यज्यते । स्वाभाविकानुकूल्यवत्तया मुक्तैरुपादीयते । अहङ्कारममकारवताऽऽत्मीयतया स्वीकृतानि वस्तूनि प्रतिकूलानि । स्वरूपज्ञानवता स्वामिशेषतया दृश्यमानानि सर्वाण्यनुकूलानि भवन्ति ।

एवं स्वाधीनसत्तादिमतो भगवतः स्वरूपं सत्यं ज्ञानमनन्तमानन्दोऽमलं च भवति । इत्थमेव द्रमिडोपनिषद्द्रष्टारः अनुसन्दधुः । एतदतिरिक्ता गुणा दिव्यमङ्गळविग्रहाश्च निरूपितस्वरूपविशेषणानि भवन्ति । एतेषु ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि षट् परत्वोपयुक्तानि । सौशील्यवात्सल्यादयः सौलभ्योपयुक्ताः । एते गुणाः सदा भगवत्स्वरूपमाश्रिताः । परव्यूहादिविभागेन गुणनियमकथनं तावतो गुणान् तथाऽनुसन्दधतां पुरतो भगवानाविष्करोतीति बोधनार्थम् । यथा उपासनाभेदेन गुणविशेषा नियम्यन्ते तथाऽत्रापीति न दोषः । तत्र पररूपे ज्ञानादयः षडपि गुणा वेद्याः । व्यूह-

उद्यानपत्रिका

श्चतुर्विध इति त्रिविध इति च शास्त्रे कथ्यते । व्यूहवासुदेवस्य परवासुदेवात् अनुसन्धेयगुणविशेषाभावात् त्रिव्यूह इति अभ्युपगम्यते सांप्रदायिकैः । परव्यूहयोर्गुणक्रियाविभागाः

षाड्गुण्याद्वासुदेवः पर इति स भवान् मुक्तभोग्यो बलाढ्या-
द्बोधात्सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो
बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥

इति निरूपिताः । विशाखयूपस्य जाग्रदादिपदभेदस्था विशेषा अपि तत एवाववार्याः । केशवादयो द्वादशापि व्यूहभेदाः । पद्मनाभादयः षट्त्रिंशत् सप्तत्रिंशत् अष्टात्रिंशद्वा विभवसंज्ञका भवन्ति । अत्र मत्स्यकूर्मादयः प्रयोजनविशेषानुरोधेन विशिष्य कथ्यन्ते । भगवान्विभवेषु कतिचित् गुणान् पिदधाति कतिचित्तु आविष्करोति प्रयोजनवशात् ।

विभवस्यावान्तरभेदा बहवः । एवं विभवान्तरमपि वेदितव्यम् । भगवतः शक्तिविशेषेण विग्रहविशेषेण चाधिष्ठिताः अत एवातिशयितकर्माणि कुर्वन्तः जीवविशेषाश्च विभवेष्वन्तर्भवन्ति । अर्चा हि आश्रितानुग्रहीतुं विम्बाकृत्यात्मना विम्बे समागताः परव्यूहादय एव । अन्तर्याम्यवतारः किल सर्वेषां हृदये सूक्ष्मरूपविशेषेण स्थितिः । सर्वव्यापकदिव्यात्मस्वरूपं सन्दिदृक्षूणां द्वारभूततयाऽन्तर्यामिरूपमिति तदभिधानम् । एवमाद्यवताररूपभेदाः शुद्धसत्त्वद्रव्यमयतया कर्मतत्फलसंसर्गरहिततया च शुद्धसृष्टिरिति कथ्यन्ते । एषु ईश्वरस्य ज्ञानसंकोचाभावं, विग्रहाणां शुद्धसत्त्वमयत्वं, ईश्वरेच्छामात्रहेतुकत्वं, धर्मसंरक्षणसमानकालिकत्वं, साधुपरित्राणादिप्रयोजनवत्त्वं एवमनुसन्दधतो जन्मान्तरसम्बन्धं विना मुक्तत्वं च गीताचार्यः प्राह । इदमनुसन्धानं शरण्यगुणविशेषज्ञानमुखेन स्वतन्त्रप्रपत्तिनिष्ठस्य महाविश्वासं दृढीकृत्य उपकरोति ।

एवमर्चावतारप्रणामादिकमपि विनैवायासं मोक्षं जनयतीति प्रशस्यते ।

उद्यामपत्रिका ।

तथैव कतिपये सूरयः अर्चावतारवैलक्षण्यं अतीवानुसन्दधानाः एतत्संरक्षकपृष्ठगामिसेनातुल्यं परतत्त्वरूपसन्दर्शनमभिमन्यन्ते । इत्थंभूतः स भगवान् स्वानन्दपरीवाहभूतान् जगत्सृष्टिस्थितिसंहाराननुतिष्ठति । अयञ्च सर्वास्वप्यवस्थासु सपत्नीक इति संप्रदायग्रन्थतो विशिष्य ज्ञायताम् । भगवतो दण्डधरत्वं श्रियः पुरुषकारत्वादिकं च विभज्याङ्गीकृतं वर्तते । श्रियं तद्धर्मधर्मिणीमित्यतिदेशेन सर्वधर्मवत्त्वेऽपि ऐच्छिकपूर्वोक्तधर्मविभागपुरस्कारेण हि, उपदिश्यमानधर्माधारापेक्षयाऽतिदिश्यमानधर्माधारस्य वैशेष्यमिति मध्यस्थानां प्राचां वचनमुपपद्यते । अयमर्थः 'युवत्वादौ तुल्ये' इति श्लोके निर्णीतः । अतो यथाप्रमाणमङ्गीकरणमेव न्याय्यम् । इत्थञ्चेशेशितव्ययोः यथाप्रमाणं विज्ञानमेव समुचितम् । अतिमहति पयोनिधौ नाविकैर्नौयानसरणिरिव विवेकिभिरियदवगन्तव्यम् ।

तत्त्वं सर्वशरीरकतया भगवानित्येकधा, आत्मानात्मभेदेन द्विधा, तत्त्व-हित-पुमर्थतया त्रिधा, रक्ष्यरक्षकहेयोपादेयतया चतुर्धा, प्राप्यत्वादिरूपेण अर्थपञ्चकोक्तप्रकारमनुरुद्ध्य पञ्चधा, सम्बन्धज्ञानेन सह षोढा, त्रिगुण-काल-शुद्धसत्त्व-जीव-ईश्वर-बुद्धि- अद्रव्यभेदेन सप्तधेति परिचिन्तयतां तदनुगुणज्ञानानुष्ठानप्रतिष्ठारूपप्रयोजनविशेषा अवगन्तव्याः ।

अकृष्टैव फलं लभमान इव क्लेशावहशास्त्राभ्यासमकृत्वैव सदुपदेशेन इत्थं तत्त्वमवगम्य मोक्षलाभाय त्वरतामिति सुस्थम् ।

## 6. परदेवतानिर्णयः ।

उक्तवैधर्म्येण सामान्यतः प्रकृतिपुरुषेश्वरविवेके जातेऽपि अव्यवधानेन मोक्षप्रयोजकं तादृशं पारमैकान्त्यं परदेवताविशेषनिर्णयाभावे न घटेतेति तन्निर्णयः प्राप्तावसरः । तत्र चेतनाचेतनयोर्भेदस्य प्रमाणसिद्धतया सर्वं ब्रह्मद्रव्यमेकमिति पक्षो न घटते । जीवेश्वरभेदस्य जीवानामन्योन्यभेदस्य च सुखदुःखादिव्यवस्थया प्रामाणिकत्वेन, ब्रह्मरुद्रादीनामीश्वरेण सहैक्यं जीवेन सहैक्यं वा नोपपादयितुं शक्यते । देवतासु प्रधानतया गण्यमानानां उद्यानपत्रिका ।

ब्रह्मरुद्रादीनां कार्यत्वकर्मवश्यत्वादेः प्रामाणिकत्वेन, भगवत एव सर्वकारणत्वावगमेन, नित्यत्वस्य तत्रैव न्याय्यत्वेन च मूर्तित्रयसाम्यवादः मूर्तित्रयैक्यवादः त्रिमूर्त्युत्तीर्णेश्वरवादः त्रिमूर्त्यन्यतमब्रह्मवाद इत्यादयो निरस्ताः ।

ब्रह्मरुद्रादयः स्वेषां विष्णुजन्यत्वं स्वयमेवाहुः । कर्मपरवशाश्चैते साधुकर्मभिर्भगवन्तमाराध्य कांक्षितपदमवापुरिति प्रमाणशतसिद्धम् । वेदापहारादिवृत्तान्तैरेतेषां मायापारतन्त्र्यं गुणवश्यत्वं ज्ञानसङ्कोचविकासवत्त्वादिकं च सुतरां विज्ञायते । भगवद्दत्तज्ञानादिना तदादर्शितं पन्थानमेव सेवन्त इति तत्र तत्र विज्ञायते । एतेषां शुभाश्रयत्वं नेति पराशरादयः प्रत्यपादयन् । स्वस्य इतरानाश्रयत्वं स्वाश्रयत्वं चान्येषां सुव्यक्तमाह भगवान्नारायणः । उभयविभूतिनाथस्य भगवत इमे विभूतिभूता इति दृश्यते । अचेतनानामिव चेतनानां ब्रह्मरुद्रादीनां भगवच्छरीरता नारायणशब्दसामानाधिकरण्येन सिद्ध्यति । स्वस्य दासत्वं भगवतः शेषित्वं च मन्त्रराजपदस्तोत्रे सर्वज्ञेन रुद्रेण कथितम् । सर्वप्रकारेण भगवतो निःसमाभ्यधिकत्वं बहुत्र प्रपञ्चितम् । जायमानाः किल मधुसूदनदृष्टाः सात्त्विकाः, ब्रह्मणा दृष्टा राजसाः, रुद्रेण दृष्टास्तामसाश्च भवन्तीति प्रमाणजातं प्रतिपादयतीति ब्रह्मरुद्रयोरनुपास्यत्वं भगवत एवोपास्यत्वं च सुव्यक्तम् । क्वचिदेतयोरुच्यमानं मोक्षोपकारकत्वमाचार्यादीनामिव ज्ञानजननद्वारा योजनीयम् । परावरयोरैक्यबुद्धिं साम्यबुद्धिं व्यत्ययबुद्धिं आसुरस्वभावप्रयुक्तप्रद्वेषादिकं चाभजतामेव सूर्यभक्त्यादिः परम्परया भगवद्भक्तिं जनयेदिति च विज्ञायताम् ।

विपरीतबुद्धिमतां देवतान्तरभक्तिर्जाताऽपि भगवतो निग्रहेण प्रत्यवायैकफला भवति । मोहनशास्त्रेण दृष्टफलसिद्धिप्रदर्शनमपि तेषामधःपतनायैव परिकल्पितम् । जातं भगवन्निग्रहं न कोऽपि शक्नोति प्रशमयितुम् । सुग्रीवादिवत् इतरदेवताः विभीषणमिव कञ्चित्स्वाश्रयं कामं बाधितुं प्रवर्तन्ताम् । अथापि सत्यप्रतिज्ञो भगवान् रावणादिवद् दुष्प्रकृतीन्निरस्य सुग्रीवादिवत् सत्प्रकृतीननुकूलयन्नेव रक्षति । क्षुद्राभ्यो देवताभ्यो विष-

उद्यानपालिका ।

मधुतुल्यानि क्षुद्राणि फलानि अल्पीयसा कालेन अवाप्यन्ते । तानि फलान्यप्यन्ततो भगवदायत्तानि । ताभ्यो विळम्बेनापि मोक्षो न लभ्येत । भगवत्सकाशात्तु अतिशयितैश्वर्याण्यपि लभ्यन्ते । श्रमापनोदनायानुष्ठितं गाङ्गजलावगाहनं पापमपि यथा व्यपोहति तथा ऐश्वर्याद्यर्थं भगवदाश्रयणं पापं व्यपोह्य रजस्तमोवृत्तिं प्रशमय्य जनकादीनामिव क्रमेण मोक्षपर्यन्तं फलं वितरति । मोक्षोपायसिद्धिमर्थयतः खलु विळंबः जायत एव । मोक्षार्थं भक्तिप्रपत्त्यन्यतरमुपायमाश्रयतां न विळंबः । तत्र स्वतन्त्रप्रपत्तिनिष्ठस्य तु विवक्षितकाल एव मोक्षः । एते च नियमविशेषाः भगवतः स्वाच्छन्द्येन उपपद्यन्ते । एवं विचारपराङ्मुखानां विषये देवतान्तरस्य सेव्यत्वं व्यवस्थापितं । अविवेकिभिराराध्यमाने देवतान्तरे तच्छरीरको भगवान् चार्वाकाराधितराजादिरिव यद्यपि प्रीयते तथापि शास्त्रार्थवैकल्येन निर्दुष्टं फलं न सिध्यति । यदि क्षुद्रफलायापि भगवानेवाराध्यते तर्हि तत्रापि अतिशयितानि फलानि भवन्ति । अनन्यप्रयोजनानामपि आराधयितॄणामानुषङ्गिकानि वितरति भगवान् फलानि । अयमर्थः कुलशेखरप्रभृतिभिः स्वग्रन्थे प्रकाशितः । अयञ्च विद्याविशेषे रागविशेषे च नियतः । उक्तमर्थं सर्वमपि द्रमिडाम्नायदर्शिनः अन्यूनं न्यरूपयन् । इदं देवतापारम्यं तत्र तत्र मन्त्रादिघटकभगवद्वाचकशब्देष्वनुसन्धेयम् । एवंविधदेवताविशेषनिर्णयरहितानां अनन्यशरणत्वावस्था नैव भवति । इत्थं देवताविशेषनिर्णय एव देवतान्तरत्यागं तदीयपर्यन्तमुपकल्पयन् तदीयपर्यन्तं भगवच्छेषत्वंचावगमयति । अत एव परकालः मूर्तित्रयमध्ये एनमेव नारायणमुपास्यमवर्णयत् । तैत्तिरीयश्रुतिरपि श्रीपतित्वचिह्नेन एनमेव निरधारयत् । पराशरादयो मुनय एवमेव शिष्येभ्योऽप्युपदिदिशुः ।

## 7. मुमुक्षु ।

एवं तत्त्वार्थानध्यात्मशास्त्रतस्साधु विजानन्तः स्वयंप्रकाशत्वज्ञातृ-

त्वाणुत्वादिभिः देहेन्द्रियादिविलक्षणमात्मानं ज्ञात्वा परलोकगमनदेहान्तरप्राप्तियोग्यतानिश्चयेन लोकोत्तीर्णपुरुषार्थार्हाः नरकपतनादिजन्मान्तरक्लेशभीत्या तत्कारणभूतकर्मभ्यो निवृत्ताः आधेयत्वविधेयत्वशेषत्वाल्पशक्तित्वाशुभाश्रयत्वादिभिः आत्मानं भगवद्व्यावृत्तं निश्चिन्वानाः स्वरूपप्राप्तभगवत्कैङ्कर्यवैभवानुभवापेक्षायोग्यतां प्रतिपद्यमानाः, प्रणवगतमकारप्रतिपन्नज्ञानत्वाद्यनुसन्धानेन देहतदनुबन्धिषु अहङ्कारममकारौ, अकारोत्तरलुप्ततादर्थ्यचतुर्थ्या देहातिरिक्तात्मस्वरूपतद्गुणेषु अहङ्कारममकारौ, उकारार्थावधारणेन शेषित्वनिरूपणघटकाहङ्कारममकारौ, नमःपदप्रतिपन्ननिषेधविशेषेण स्वरक्षणार्थव्यापारनिरूपिताहङ्कारममकारौ, नारायणशब्दोत्तरचतुर्थीप्रतिपन्नकैङ्कर्यरूपे फले फलान्तरानुभवन्यायप्राप्तावहङ्कारममकारौ च यथायोग्यमर्थतः शब्दतश्च निराकुर्वन्तः, अल्पत्वास्थिरत्वदुःखमूलत्वदुःखमिश्रत्वदुःखोदर्कत्वविपरीताभिमानमूलत्वस्वाभाविकानन्दविरुद्धत्वरूपान् अचिद्विषयानुभवसंभावितान् सप्त दोषान्, यथासंभवमुत्पन्नान् चेतनमात्रानुभवदोषान् एतादृशानुभवप्रतिद्वन्द्विभगवदनुभववैलक्षण्यञ्च विशदतरमनुसन्दधानाः, वैराग्यावस्थामुपाश्रयन्तः प्रवृत्तिधर्मतो विरताः निवृत्तिधर्मानुष्ठानकुतूहलिनः किल मुमुक्षवो भवन्ति । परावरतत्त्ववेदिनोऽपि परमपुरुषार्थोपायमननुतिष्ठन्तः श्रुतफलं दूरीकुर्वन्तः नितरां परिहस्यन्ते । अतः श्रुतानुरूपं उपायविशेषानुष्ठाने त्वरमाणा एव सर्वोन्नता भवितुमर्हन्ति ।

## 8. अधिकारिविभागः ।

एवं परमपुरुषार्थोपायभूते निवृत्तिधर्मे प्रवृत्तौ द्वावधिकारिणौ । अद्वारकप्रपत्तिनिष्ठः सद्वारकप्रपत्तिनिष्ठश्चेति । स्वतन्त्राङ्गप्रपत्तिभ्यां द्वावपि प्रपन्नौ, फलसाधनभक्तिभ्यां उभावपि भक्तौ कीर्त्येते । यथा मानसवायव्यादयः समानफलाः यथाधिकारं स्नानभेदाः तथा उक्तिराचार्यनिष्ठेत्येतावपि प्रपत्तेर्मुखभेदौ । तत्रोक्तिर्नाम आनुकूल्यसङ्कल्पाद्यङ्गेषु अविशदज्ञान-

उद्यानपत्रिका ।

वतः अनन्यशरणस्य महाविश्वासवतः शरण्यज्ञातपूर्णताविशिष्टप्रपत्तिगर्भा- चार्योपदिष्टवाक्यमात्रेण धात्रीकथितवचनेन महाराजं प्रसादयतः मुग्धसा- मन्तराजकुमारस्येव प्रार्थनापूर्वकस्वभरसमर्पणम् ।

पदवाक्यादिवृत्तान्तमविजानता ब्रह्मचारिणा कथितं 'भवति भिक्षां देही'ति वाक्यं सत आढ्यस्य गृह इव परिपूर्णपरमोदारस्य भगवतो विषये इयमुक्तिः फलेनाविनाभूता। ज्ञानदरिद्राणां एवमुक्तीतरगतिशून्यानां प्रार्थनावाक्यं न कदाऽपि जरयति भगवान् फलमप्रदाय । अभियुक्ता अपि 'प्रपत्तिवाचैव निरीक्षितुं वृणे' इत्यादिभिरुक्तमर्थं व्याचख्युः । नव भरोऽहमकारिषीति श्लोकेन उभयं संयोज्य निरूप्यत इति विभाव्यम् । अतस्थः अपिशब्दः प्रत्येकं साधनभावमवगमयति ।

आचार्यनिष्ठस्तु आचार्यकृतात्मीयसमर्पणे अन्तर्भवति । यथा भागवताश्रयाणां सिद्धिरसंशयिता तथा आचार्यनिष्ठस्य फलसिद्धिरपि । गिरेर्गर्यन्तरमभ्युत्पतितस्य सिंहस्य शरीरगता जन्तव इव श्रीमद्रामानुज- श्रीपादसंबन्धेनैव वयमुत्तीर्णा इति ह्यभियुक्तानां श्रीसूक्तिर्वर्तते । व्याख्याता चेयं न्यासतिलकस्थेन अन्धोऽनन्ध इति पद्येन । कथञ्चिदेनके- नापि अनुष्ठितां प्रपत्तिं विना न वितरति भगवान् पुरुषार्थम् । भागव- ताभिमानभगवद्विषयवासादिमतामपि पूर्वतः परतो वा उपायसम्बन्धः स्वेन परेण वा कृतो वर्तते । भागवताभिमानादयो हि भक्तिप्रपत्त्यन्यतरसम्बन्धं उत्पन्नोपासनानामुत्तरोत्तरोपचयं स्वतन्त्रप्रपत्तिनिष्ठस्य कैङ्कर्याभिवृद्धिं भगव- त्प्राप्तौ त्वरां चोपजनयन्ति । व्यासादिवत् उपायान्तरसमर्थस्य विळम्बक्ष- मस्य भक्तिरूपोपायवतः प्रारब्धकर्मावसानभाव्यन्तिमप्रत्ययावधिकोपासना- निष्पत्तिपूर्वको मोक्षः फलं भवति ।

सर्वाधिकारिकां सर्वानिष्टनिवर्तनक्षमां सर्वेष्टसाधनभूतां सुकरां स- कृत्कर्तव्यामप्रतिबद्ध्यां ब्रह्मास्त्रबन्धवत् उपायान्तरसम्बन्धासहस्वफलां प्रपत्तिं

उद्यानपत्रिका।

स्वाधिकारानुगुणमद्वारकमाश्रयतां वाञ्छितभगवत्कैङ्कर्याचरणानुमतेतच्छरीरावसानसीमा इहानुष्ठितकैङ्कर्यफलोद्गमवती परिपूर्णकैङ्कर्यपर्यन्ता मुक्तिः फलति । सकलफलप्रदे भगवति कृता प्रपत्तिः द्वयोरप्यधिकारिणोर्वाञ्छितानुगुणं फलं ददातीति युक्तमेव । चतुर्विधानामपि फलानां भक्तिः प्रपत्तिश्च साधनमिति प्रमाणतोऽवगम्यते । विवक्षितानि सर्वाण्यपि फलानि यथामनोरथं स्वोद्दिष्टे समय एव जायन्ते । अत एव प्रपन्नादन्ये निहीनाः कथ्यन्ते । प्रारब्धसुकृतविशेषमूलकेच्छावैषम्यात् इह कैङ्कर्यवैषम्यं भवति । शरीरावसानानन्तरभाविकैङ्कर्ये तु न किञ्चिदपि वैषम्यम् । पारतन्त्र्यमप्येकरूपम् । परमफलानुभवदशायां कथ्यमानं स्वातन्त्र्यं कर्मवश्यतारहितसर्वकैङ्कर्ययोग्यतापरमिति सर्वं सुस्थम् ।

## 9. उपायविभागः ।

मुमुक्षूणामनुष्ठेय उपायः ज्ञानविकासविशेष एव । एतत्साध्यः प्राप्तिरूप उपेयोऽपि ज्ञानविकासविशेष एव । अत्रोपायरूपः ज्ञानविकासविशेषः करणसापेक्षः शास्त्रविहितः स्वरूपनिरूपकसत्यत्वादिगुणसहिततत्तद्विद्याविशेषाधीननियतकतिपयगुणविशिष्टब्रह्मविषयकः । उपेयरूपज्ञानविकासविशेषो हि करणनिरपेक्षः स्वभावप्राप्तः गुणविभूत्यादिसर्वोपेतपरिपूर्णब्रह्मविषयकः । तत्क्रतुन्यायो हि उपासितगुणातिरिक्तगुणानां न प्रतिषेधमाह । किन्तूपासितगुणानामप्रहाणमेवेति न दोषः । प्राप्तिरूपानुभवपरीवाहतया कैङ्कर्यमुपेयं भवति । इत्थमुपायप्राप्तिरूपोभयज्ञानविषयस्य भगवत उपायत्वमुपेयत्वं च फलप्रदत्वभोग्यत्वाभ्यां संभवतः । अद्वारकप्रपत्तिनिष्ठस्य विषये भगवदीयमुपायत्वमुपायान्तरस्थाननिवेशिताविशिष्टम् । अन्येषामधिकारिणां विषये कर्मयोगारम्भप्रभृति उपासनापूर्ति यावत् प्राप्तपापनिवर्तनेन सत्त्वसंवर्धनेन उपासनायाः फलपर्यन्तत्वकल्पनेन च विशिष्टं तदुपायत्वम् ।

तत्र कर्मयोगो नाम सति जीवपरमात्मयाथात्म्यज्ञाने, शक्त्यैः फल-

उद्यानपालिका ।

सङ्गविवर्जितैः काम्यकर्मभिः, सह च नित्यनैमित्तिकैः सनियमं परिगृह्यमाणः कर्मविशेषः। तदवान्तरभेदाः देवार्चनतपस्तीर्थदानयज्ञादयः दैवमेवापरे यज्ञमित्यारभ्य गीतायां कथिताः। यथा प्रपत्तिः साक्षात्, भक्तिद्वारा वा मोक्षहेतुः तथा सपरिकरः कर्मयोगः साक्षात्, ज्ञानयोगद्वारा वाऽऽत्मावलोकनहेतुः।

ज्ञानयोगो नाम कर्मयोगनिर्मलीकृतस्वान्तस्य, प्रकृत्यादिविलक्षणस्याधेयत्वादिभिर्भगवच्छरीरभूतस्य स्वात्मस्वरूपस्य नैरन्तर्येण चिन्तनम्। यथा रत्नगर्भग्रन्थिदर्शनं तद्व्यतिरिक्तवैतृष्ण्यपूर्वकं रत्ने उत्कटेच्छामुत्पादयदेव तत्प्राप्तिसाधने प्रवर्तयति तथेदमात्मावलोकनं परमात्मानुभवव्यतिरिक्तवैतृष्ण्यपूर्वकं भगवदुत्कण्ठामुत्पादयत् भक्तियोगे प्रवर्तयतीति तदधिकारकोटौ प्रविशति।

भक्तियोगो नाम अनन्यनिष्ठस्यानन्याधीनस्यानन्यशेषस्य भगवतः स्वरूपादिकं विषयीकुर्वन् निरतिशयप्रीतिरूपो ध्यानविशेषः। स च तैलधारावदविच्छिन्नस्मृतिरूपः साक्षात्कारसदृशवैशद्यमादधानः आ परमपदप्रयाणदिवसात् प्रत्यहमनुष्ठानेन संवर्धमानः अन्तिमप्रत्ययावधिको ज्ञानसन्ततिविशेषः। ज्ञानविकासहेतुसत्त्वविवृद्धिप्रातिबन्धकरजस्तमोमूलभूतपापनिबर्हणद्वारा वर्णाश्रमधर्माः अस्याङ्गतां भजन्ति। एष चापचेळिमबुद्धीनामाश्वासाय, कामनाभेदेन ऐश्वर्यादीनामपि साधनं भवतीति 'चतुर्विधा भजन्ते माम्' इत्यादिभिर्निरूपितम्। तत्र भक्तस्योत्कर्षमन्येषां च्यवनधर्मत्वं च भगवानाह।

एवं विहितो भक्तियोगः परभक्तिरुच्यते। एतस्य हेतुभूतः सात्त्विकसहवासादिजनितो भगवद्विषयः प्रीतिविशेषः तद्विज्ञानाभिनिवेशकारणभूतो भक्तिरित्युच्यते। शास्त्रजन्यतत्त्वज्ञानकर्मयोगादिपरम्परया जाता परभक्तिः साक्षात्काराभिनिवेशमुत्पादयन्ती 'दर्शयात्मानम्' इति विलाप-

 उद्यानपत्रिका।

यन्ती इत्थमपेक्षाविशेषमूलकभगवत्प्रसादविशेषात् तत्कालनियतपरिपूर्णसाक्षात्कारं जनयति । एवंभूतः साक्षात्कारः परज्ञानमित्युच्यते । इत्थं निरतिशयभोग्यभगवत्साक्षात्करणे तृषितस्य तटाकसन्दर्शन इव समुपजातः प्रीत्यतिशयः परमभक्तिरुच्यते । एषा च निःसङ्कोचभगवदनुभवमन्तरा क्षणमपि धर्तुमशक्यमभिनिवेशविशेषमुत्पाद्य, अनतिक्रमणीयलक्ष्मीशपथं पुरस्कृत्य समाह्वानेन कालव्यवधानरहितप्राप्तिप्रदानयोग्यां भगवतस्त्वरामुपजनय्य तीव्रतृष्णाशमनेन परमं पदं प्रापयति । एष च भक्तियोगः त्रैवर्णिकेतरेषाम्, त्रैवर्णिकेष्वपि ज्ञानशक्तिविधुराणाम्, विळम्बाक्षमाणां च न योग्य इति स्वसामर्थ्यैयत्तां विदित्वा अद्वारिकां प्रपत्तिं मोक्षोपायतयाऽवलम्बमानानां परभक्तिस्थाननिविष्टत्वात् सर्वफलसाधनभूतायाः प्रपत्तेः, उपासकस्य परभक्तेः परस्ताज्जायमाना अवस्था इवामीषामपि कांक्षितानुगुणमाविर्भूता उत्तरावस्थाः फलभूता भवन्ति । अधिकारिविशेषेण तुल्यफलत्वादमू भक्तिप्रपत्ती विकल्पिते । अनयोर्भेदः नानाशब्दादिभेदादित्यधिकरणे सिद्धम् । विकल्पोऽविशिष्टफलत्वादित्यधिकरणे विकल्पश्च सिद्धः । उपासनायां विशेषा इव न्यासविद्यायामपि मन्त्रादिविशेषाः शाखाभेदसंहिताभेदादिभिरुपपन्नाः । नमस्कारवत्प्रपत्तिरपि वाचिककायिकमानसभेदेन त्रिधा विभज्य निरूपिता । त्रयाणां संश्लेषे तु नमस्कारवत् प्रपत्तिरपि पूर्णा भवतीति वदतामपि वाचिककायिकव्यापारविशेषरूपपरीवाहशालिमानसप्रपत्तिपूर्तौ तात्पर्यम् । यथाधिकारममूः फलप्रदा इति प्रागेवोक्तमित्यलम् ।

## 10. प्रपत्तियोग्यः ।

एवं कांक्षितफलविशेषं प्रत्युपायान्तरमनपेक्षमाणस्य न्यासविद्यायामवतीर्णस्य चेतनस्यात्राधिकारविशेषादिर्ज्ञातव्यः । फले अर्थित्वं उपाये सामर्थ्यं चाधिकारः । सामर्थ्यं च शास्त्रार्थविज्ञानं तदनुष्ठानशक्तिमत्त्वं शास्त्रानुमतजातिगुणादियोग्यता च । अयं चाधिकारः पूर्वमेव सिद्धः स्यात् ।

उद्यानपत्रिका ।

एवमधिकारभाजः प्रयोजनं सत् साध्यत्वेनानूद्यमानं फलम् । फलार्थं साध्यत्वेन विधीयमानः उपायः । मुमुक्षावतः स्वतन्त्रप्रपत्तिरूपमोक्षोपायविशेषनिष्ठस्य उपासकस्य च शास्त्रजन्यसम्बन्धज्ञानादिके तुल्ये सति प्रपित्सोराकिञ्चन्यमनन्यगतित्वं च विशेषतोऽधिकारौ भवतः । तत्राकिञ्चन्यमुपायान्तरसामर्थ्याभावः । अनन्यगतित्वं नाम प्रयोजनान्तरवैमुख्यं शरण्यान्तरवैमुख्यं च । इदं प्रयोजनान्तरवैमुख्येनाप्यर्थतः सिद्ध्यति । तीव्रतमां मुमुक्षां विना देहानुवृत्त्यादिप्रयोजनासक्तस्यानुष्ठितायामपि मोक्षार्थप्रपत्तौ प्रयोजनान्तरानुरोधेन मोक्षोऽपि विळम्बते । एतदीयाकिञ्चन्यानन्यगतित्वयोः उपायान्तराज्ञानाशक्ती, फलविळम्बासहत्वं च निबन्धनम् । शरण्यान्तरवैमुख्यस्य प्रयोजकं स्वपरसाधारणभगवदेकपारतन्त्र्याध्यवसायः, प्रयोजनान्तरवैमुख्यं च । अयं प्रपत्त्यधिकारविशेषः 'स पित्रा च परित्यक्तः' 'अकिञ्चनोऽनन्यगतिः' इत्यादिप्रमाणं सत्सम्प्रदायं चाश्रित्य कथितः । एतादृशाधिकारे सिद्धे सति जात्यादिनियमो नापेक्ष्यत इति प्रपत्तेः सर्वाधिकारत्वं सुस्थम् ।

## 11. परिकरविभागः ।

अस्याः प्रपत्तेः परिकरभूतानि, आनुकूल्यसङ्कल्प, प्रातिकूल्यवर्जन कार्पण्य, महाविश्वास, गोप्तृत्ववरणानि पञ्च । भक्तेरष्टाङ्गत्वव्यपदेशवत् प्रपत्तेः षड्विधत्वव्यपदेशः अङ्गाङ्गिसमुच्चयेन उपपादनीय इति निक्षेपस्याङ्गित्वमन्येषामङ्गत्वं च बोधयता वचनेनैव न्यायसञ्चारनिरपेक्षं सिद्ध्यति । अहिर्बुध्न्योक्तं फलत्यागरूपमङ्गान्तरं मोक्षार्थनिक्षेपे नियतं वर्तते । फलसङ्गकर्तृत्वादित्यागस्य कर्मयोगादिसर्वनिवृत्तिधर्मसाधारणतया मुमुक्षोः साङ्गसमर्पणदशायां तदनुसन्धानं कर्तव्यम् । प्रवृत्तिनिवृत्तिरूपभगवदभिमताचरणस्य मूलभूतं पारार्थ्यज्ञानं आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनयोः प्रयोजकं भवति । अनुष्ठिताभ्यामाभ्यामपायपरिहारः सिद्ध्यति । कार्पण्यं नाम आकिञ्चन्याद्यनुसन्धानं, तन्मूलकगर्वहानिः, कृपाजनककृपणवृत्तिर्वा । इदञ्च

उद्यानपत्रिका ।

भगवतः कारुण्यमुत्तम्भयःस्वीयानन्योपायतामपि पुष्कलयति । महाविश्वासश्च निःसन्देहमुपायानुष्ठानसिद्धिं तदुत्तरं स्वनिर्भरतां च परिब्रह्मयति । स्वरूपानुचितपुरुषार्थानामिव स्वरूपप्राप्तस्यापवर्गस्यापि पुरुषार्थत्वाविशेषात्पुरुषप्रार्थनामन्तरा दातुमनर्हतया अत्र गोप्तृत्ववरणमप्यपेक्षितम् । श्लाघनीयमपि वस्तु अर्थयमानायाददानो हि न पुरुषार्थदायी भवति । अत एव 'अप्रार्थितो न गोपायेत्' 'गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम्' इति च कथितं सङ्गच्छते । इत्थं पञ्चानामङ्गानां न्यासविद्यानुष्ठानोपयुक्ततया तदविनाभूतस्वभावत्वं युक्तम् । एष च परिकरः राक्षसीरुद्दिश्य सीताप्रपदनं विदधति त्रिजटावाक्ये साधु दृश्यताम् । तथा हि । 'तदलं क्रूरवाक्यैर्वः' इत्यनेन प्रातिकूल्यवर्जनमुक्तम् । 'सान्त्वमेवाभिधीयताम्' इत्यनेन वाक्प्रवृत्तौ विधीयमानायामपि तदनुसन्धानजनितो तन्मूलभूतो मानस आनुकूल्यसङ्कल्प आक्षिप्यते । 'राघवाद्धि भयं घोरं राक्षसानामुपस्थित'मित्यनेन गत्यन्तरनिषेधकेन, आकिञ्चन्यं तदनुसन्धानजं गर्वहान्यादिरूपं कार्पण्यं चोक्तप्रायम् । अलमेषा परित्रातुमित्यनेन 'अलमेषा परित्रातुं राघवाद्राक्षसीगणम्'इति हनुमदनुवादवचनेन च भगवतो निग्रहसङ्कल्पमपि प्रशमय्य रक्षितुं शक्नोति सीतेति महाविश्वासः कथितः । 'अभियाचाम वैदेहीम्' इत्यनेन गोप्तृत्ववरणं कथितम् । 'प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा' इत्यत्र प्रसादकारणविशेषप्रतिपादकप्रणिपातशब्देन अङ्गिभूत आत्मनिक्षेपो विवक्षितः।

इत्थं साङ्गो निक्षेपोऽत्र प्रतिपादितः ।

एवमुपदिष्टानां राक्षसीनां त्रिजटास्वीकरणोपयुक्तमप्रतिषेधमेवावलम्ब्यातिवात्सल्येन 'भवेयं शरणं हि वः' इति देवी प्रत्यपादयत् । आभियुक्ता अपि एतद्वचनस्य फलपर्यन्ततां 'मातर्मैथिलि' इति पद्येन प्राकाशयन् । एवं त्रिजटाया आत्मात्मीयभरसमर्पणे जन्मसम्बन्धप्रयुक्ताभिमानाविषयीभूता राक्षस्योऽप्यन्तर्गता भवन्ति । एवमेव विभीषणभरसमर्पणे तदनुजीविनश्च-

उद्यानपलिका ।

ममतात्यागफलत्यागयोः निबन्धनमात्मात्मीयस्वरूपानुबन्धिभगवदेकशेषत्वज्ञानम्। फलोपायत्वत्यागस्य निबन्धनं शरण्यप्रसादनतयाऽनुष्ठितस्यास्य फलाव्यवहितकारणत्वमचेतनतया फलप्रदानसङ्कल्पानाश्रयत्वं च ।

भगवतः फलोपायत्वं हि सहजसौहार्दतः करणकळेबरदानप्रभृतिद्वयोच्चारणपर्यन्तानां सर्वेषां निदानभूतस्य प्रसादपूर्वकसङ्कल्पविशेषविशिष्टस्य तस्याव्यवहितकारणतया , उपायान्तरशून्यानामुपायस्थाननिवेशनेन च भवति । एतस्य धर्मिग्राहकप्रमाणसिद्धत्वेन न युक्तिभिर्विचलनं शक्यम् ।

अयमत्र संग्रहः [अम्माळ्] इति प्रसिद्धैर्वरदाचार्यैरनुगृहीतः । चिरेणानिष्टाचरणात् संसारी अभवम् । इतः प्रभृति अनुकूलो वर्ते । प्रतिकूलं नाचराणि । भवन्तं प्राप्तुं न मे कोऽप्युपायः । भवन्तमेवोपायमध्यवस्यानि । त्वमेव उपायो भव । इतः परमिष्टप्राप्तौ अनिष्टनिवृत्तौ च न मे कश्चन भरः, इति । अत्रानुकूल्यसङ्कल्पादीनामुपायपरिकरत्वेन सकृत्त्वम् । उत्तरकालानुवर्तिनां तेषामुपायफलतया यावदात्मभावित्वं चास्ति । प्रातिकूल्यवर्जनस्य सङ्कल्परूपत्वे सकृत्कर्तव्यत्वं सुस्पष्टम् । अभिसन्धिविरामरूपत्वे प्रातिकूल्यस्वरूपनिवृत्तिरूपत्वेऽपि वा, प्रथमक्षणवर्तिनोऽङ्गत्वं तदुत्तरकालिकस्य फलरूपत्वं चावगन्तव्यम् । इत्थं महाविश्वासेऽप्यूह्यम् । यावज्जीवं निरपराधकैङ्कर्यं प्रारब्धशरीरनाशानन्तरं मोक्षं च सह फलतया उद्दिश्य किलाभियुक्ताः प्रपद्यन्ते ।

## 13 कृतकृत्याधिकारः ॥

एवमुपायविशेषनिष्ठः एतदुत्तरं स्वाविवक्षितफलाय कर्तव्यांशेऽन्वयविरहात् कर्तव्यस्य सकृदनुष्ठानेन कृतत्वात् , भगवतः सत्यसङ्कल्पस्य मा शुचः इति वचनाच्चात्मनो जातां भरन्यासदशामालोक्य निर्भरः, मामेकं शरणं व्रजेति सिद्धोपायतया स्वीकृतस्य भगवतः 'अहं त्वा सर्वपापेभ्यो

उद्यानपत्रिका ।

मोक्षयिष्यामी' ति फलप्रदानसङ्कल्पेन फलसिद्धौ निःसंशयः, निर्भयश्च, सवासनं त्यक्तानि पुरुषार्थान्तराणि, सपरिकरमुज्झितान्युपायान्तराणि, अप्रयत्नं महानिधिलाभमिव स्वयमुदेष्यमाणपरमपुरुषार्थपरीवाहांश्च साध्वनुचिन्त्य हृष्टमानसः, वेदेषु लिखितमौपाधिकं प्रजापतिपशुपतिप्रभृतीनां किङ्करतारूपऋणपत्रं, मूलधनानुपकारिप्रत्यहमनुष्ठातव्यभृत्यकृत्यरूपतद्वृद्धिपत्रञ्च विच्छिन्दन्, पञ्चमहायज्ञादिनित्यनैमित्तिककर्मसु विधिप्राप्तं तद्यजनं कञ्चुके समर्पितमाल्यादि राज्ञीव तदन्तर्यामिणि पर्यवसाययन्, प्रजापतिप्रमुखशब्दानामवयवशक्तिपौष्कल्येन भगवति नारायण एव स्थिरां वृत्तिमाकलयन्, तच्छब्दमात्रोच्चारणेन पारमैकान्त्यं शुद्धयाजिनामिव अभङ्गुरमात्मनः स्थिरीकुर्वन्, स्ववर्णाश्रमानिमित्तगुणाद्यनुरूपशास्त्रवेद्याज्ञानुज्ञापरिपालनरूपकैङ्कर्यमाचरन्, मुक्ततुल्यः, उपायपूर्त्या कृतकृत्यः, पुरुषार्थपूर्त्या कृतार्थ इति शास्त्रैः तन्निष्ठैश्च श्लाघ्यमानो वर्तते । एवंभूतं कृतकृत्यतानुसन्धानमावश्यकमिति शरणागतिगद्ये निरूपितम् । चिरेणाज्ञातिलङ्घनमूलकभगवन्निग्रहागतसंसृतिखेदमनुभवतः अवसरप्रतीक्षभगवत्कृपामूलकसदाचार्यकटाक्षविषयीकरणलब्धद्वयोच्चारणानूच्चारणसमुपजातं प्रपत्त्यनुष्ठानं निग्रहहेतून् सर्वान् निर्मूल्य श्रीशं प्रसादयत् प्रसन्नेन भगवता स्वयमेवामुं संरक्षेदिति विश्वसतो निर्भरीभवन एव 'माशुचः' इति भगवद्वाक्यस्य परमं तात्पर्यम् । प्रपत्त्यनुष्ठानात् प्राक्शोकाभावे अधिकारानिष्पत्त्या उपायानिष्पत्तिः स्यात् । प्रपत्तेः पश्चाच्छोकसत्त्वे उपायस्यापूर्णतया फलं विलम्बेत । पूर्वं प्राप्तशोकः पश्चाद्वीतशोक एव हि कृतकृत्य इत्युच्यते ।

## 14 स्वनिष्ठाभिज्ञानाधिकारः ॥

इत्थं भूतः कृतकृत्यः परकृतानां परिभवानां आत्मस्वरूपासम्बन्धित्वज्ञानेन विषादादिराहित्यं, परिभवादिना स्वीयं पापमखिलं स्वीकुर्वत्सु

उद्यानपालिका ।

मूढेषु उद्वेलां कृपाम्, अनवरतमनुसन्धातव्यानां स्वदोषाणामविस्मरणमनवधिकपरीवादैरुत्पादयत्सु उपकारस्मृतिम्, सर्वेषां भगवत्पारतन्त्र्यं कर्मवश्यतां च दृष्ट्वा, स्वपरकर्मानुगुणभगवत्सङ्कल्पानुरोधेन परीवादमाचरत्सु अविकृतचित्ततां, प्रारब्धपापविशेषशिखाकर्तनेन सन्तुष्टिं च भजति चेत् अचिद्विलक्षणे आनुकूल्यादियोग्यज्ञानवति सर्वतोमुखाकिञ्चन्यभाजि भगवदनन्यार्हशेषत्वपारतन्त्र्ययुजि भगवदधीनाहितसिद्धिमति स्वस्वरूपे निष्ठाऽस्तीति विजानीयात् ।

भगवतोऽन्यत्रारक्षकत्वबुद्धिम्, मृत्युपर्यन्तेषु भयहेतुष्वपि अनुद्विग्नतां, मरणानन्तरं महापुरुषार्थस्यात्यासत्त्या प्रीतिमत्त्वम्, रक्षकावष्टम्भसम्भूतं विश्वासदार्ढ्यम्, स्वीयभरन्यासे स्वयत्ननिवृत्तिम्, इष्टप्राप्तेरनिष्टनिवृत्तेश्च शरण्यैकाधीनतां च साधु चिन्तयतां उपाये निष्ठा निष्प्रत्यूहा भवति ।

प्रारब्धकर्माधीनायां च सत्यां देहयात्रायां भगवत्सङ्कल्पं विना स्वसङ्कल्पस्य निरर्थकतां, प्रारब्धानुगुणमागच्छत्सु कर्मफलेषु ऋणनिवृत्तिबुद्ध्या अप्रतिषिद्धमनुभवम्, कर्मविशेषाधीनप्राप्यान्तरलाभालाभयोर्हर्षशोकविधूननेन स्वानुरूपपरमप्राप्यकैङ्कर्ये महतीं रुचिम्, तत्र कदा करेति त्वरां च भजतां पुरुषार्थनिष्ठा प्रतिष्ठिता वर्तते ।

एवं स्वरूपोपायपुरुषार्थेषु मूलमन्त्रादिभिः निष्ठां साधु प्रपश्यतां ब्रह्मविदपचारानुदयेन, तद्व्यतिरिक्तेषु भीतिस्थानेषु, स्वरूपप्राप्तकैङ्कर्यव्यतिरिक्तप्रीतिस्थानेषु च न मनागपि प्रवृत्तिर्भवेत् । यदृच्छया जातु चित् प्रवृत्तावपि भीतिः प्रीतिर्वा नोदयेत ।

## 15 उत्तरकृत्याधिकारः ॥

इत्थं कृतकृत्यः विज्ञातस्वरूपोपायपुरुषार्थनिष्ठः, विस्तीर्णेऽपि क्षेत्रे कर्षकः असारमंशं परित्यज्य सारतममिव शरीरे ऋणित्वांशं परित्यज्य आज्ञानुज्ञादिकैङ्कर्यप्रयोजकमंशान्तरं स्वीकुर्वाणः मुक्तकैङ्कर्यपरम्परामिव उद्यानपत्रिका ।

भोग्यतमामनन्यप्रयोजनां शास्त्रविभक्तकालविशेषनियतां शृङ्खलाक्रमवतीं भगवत्प्रसादकारणभूतां अवश्यानुष्ठेयां स्वरूपानुरूपकालक्षेपार्थां उत्तरकृत्यपद्धतिं स्थिरयितुमेवं वर्तते ।

तथा हि—यदिहाज्ञातपूर्वेषु ज्ञातव्येष्वर्थेषु कृतकृत्यताभिमानेन अनादरमकुर्वन् अनुभवपूर्तिनिष्पादकयोर्ज्ञानवैशद्यप्रेम्णोरावश्यकतया तदुचितज्ञानभक्तिप्रार्थनया अनिषिद्धतया च भगवद्विषयचित्तरञ्जनचणान् यथाविधि समाश्रितपरमैकान्तिसकाशात् तदुपदेशान् शृणुयात् ।

यच्च तादृशैः परमैकान्तिभिराचरितेषु स्ववर्णाश्रमजात्याद्यनुगुणमनुष्ठेयांशं निष्कृष्य स्वोत्कर्षपरनिकर्षानुसन्धानरूपमहागर्ते आत्मानमपातयन् निपुणं विलोक्य कर्मसु वर्तेत ।

यच्च शठकोपनाथमुनिप्रभृतीनामिव जातेष्वपि साक्षात्कारादिफलोद्गमपर्वस्वनुत्सेकः अधिकारभूतमाकिञ्चन्यं तत्प्रकारांश्चाविस्मरन्नासीत ।

यच्चास्मदादिकालागतानर्हतामूलकभगवत्कैङ्कर्यपरिच्युतौ अनिर्विण्णः मातृस्तन्यवदतिप्रियेण पथ्येन भगवत उपदेशवैभवेन अवताररहस्यादितीर्थमवगाह्य गतमननुशोचयन् अपर्यनुयोज्यशरण्यप्रभावसमागतामार्हन्तीमवलोक्य तदनुरूपाज्ञानुज्ञाकैङ्कर्याचरणोचितं करणनिचयं सात्त्विकाहारसेवादिभिरयोग्यविषयान्तरपराङ्मुखं विधाय योग्यानुभवेषु प्रवर्तयेत् ।

यच्च विहारद्यूतेऽपि यथाविधि शारप्रचारणमिवाज्ञानुज्ञाकैङ्कर्येष्वपि शासितुरभिमतमनुवर्तमानः पित्तपरिहारार्थपयःपानतुल्यतां तदाचरणस्य अनाकलयन् लब्धारोग्यपयःपानतुल्यतां स्वयं भोग्यतया अनुसन्दधानः प्रकामप्रहर्षेणानुतिष्ठेत् ।

यच्चाधिकारिविशेषार्थं दयया सान्निध्यं प्रकल्पयति भगवत्यर्चावतारे गुणपूर्तिं पावनतमत्वं कुवासनादिनिवर्तनक्षमत्वमाश्रितपारतन्त्र्यमाकर्षकत्वञ्चानुसन्धाय तत्तत्सम्बन्धवर्गपरत्वसौलभ्याद्यनुरूपां वृत्तिमाश्रयेत् ।

उद्यानपत्रिका ।

यच्च पादुकायां भरत इव न्यायार्जितैर्द्रव्यैः राजसेवकवृत्तिं भगवदर्चावतारे सादरं कुर्यात् ।

यच्च एनां वृत्तिं परिणीतायाः कुलवध्वाः मङ्गल्यसूत्रादिसंरक्षणकल्पां मन्येत ॥

यच्च इत्थं भगवन्तमुपक्रम्य आ भागवतेभ्यः प्राप्तस्य कैङ्कर्याख्यपुरुषार्थस्य प्रधानकारणं सदाचार्यसंबन्ध इति विश्वस्य, अभिषेक्ष्यमाणस्य राजकुमारस्य रात्रौ प्रदीपाद्यारोपणमिव सदाचार्यकृतमुपकारं विज्ञाय तत्र कृतज्ञतां अनुचिन्तयेत् ।

यच्च एवमेतेषां साधारणभूतं प्रधानकारणं मुक्तदशायां पर्यनुयोज्यभगवत्स्वातन्त्र्यमूलकात्मानुबन्धिभगवदनुभवविच्छेदपरिहारभूतं च भगवतस्सहजं कारुण्यमिति विचिन्त्य तत्रापि कृतज्ञतां प्रकाशयेदिति ।

इत्थंभूते उत्तरकृत्ये मनोवाक्कायैः परिहार्येषु परिग्राह्येषु च सारभूताः एते—

१ परमपुरुषार्थरुचिसंवर्धनाय विस्मर्तव्येषु प्रधानं विषयास्वादः ।

२ कृतघ्नतापरिहाराय आचार्यकृतप्रथमकटाक्षप्रभृत्युपकारः स्मर्तव्येषु प्रधानं भवति ।

३ कार्पण्यप्रतिष्ठायै आत्मोत्कर्षः अवचनीयेषु प्रधानं भवति ।

४ उपायनिष्ठामविस्मर्तुं वक्तव्येषु द्वयं प्रधानम् ।

५ भगवत्प्रीतिसंरक्षणाय परिहार्येषु ब्रह्मविदपचारः प्रधानम् ।

६ पुरुषार्थसागरस्याविशोषणाय अपरिच्छेद्यानुवृत्तये च कर्तव्येषु प्रधानं करणत्रयसंपाद्यभगवत्कैङ्कर्यसीमभूतं भागवतकैङ्कर्यम् ॥

इत्थमुत्तरकृत्यविशेषः फलप्रतिपादकस्थलेष्वनुसन्धेयः ॥

उद्यानपलिका

## १६. पुरुषार्थकाष्ठाधिकारः

परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपं स शेषः परश्शेषीति श्रीभाष्यकाराभिमतानुरोधेन भगवदतिशयाधायकत्वं चेतनस्य प्राप्तम् । शरीरतयातिशयाधानं त्वचेतनसाधारणं भवति । चैतन्यमुखेनातिशयाधानं किल युज्यते । अस्य शास्त्रविरुद्धाचरणं शासितुर्भगवतो लीलारसमेव केवलमुत्पाद्य तदतिशयमादधाति । शास्त्रानुमताचरणं भगवतः सन्तोषमुत्पाद्य तदीयौदार्यादिप्रकाशनद्वारातिशयमादधाति । एवं नित्यो मुक्तश्च भगवदभिप्रायसाक्षात्कारानुविहितकैङ्कर्येण भोगविशेषमुत्पाद्यातिशयमाधत्तः । अयं च प्रकारः शास्त्रमुखेनेश्वराभिप्रायं विदुषः कृतकृत्यस्यापि तुल्यः । भगवल्लीलारसमात्रप्रयोजकमपि शास्त्रविरुद्धाचरणं स्वानर्थं जनयति । बद्धदशायां शास्त्रमुखेन मुक्तदशायां प्रत्यक्षेण च भगवदभिप्रायं ज्ञात्वा तदनुरूपाचरणं तु भगवतो लीलारसम्, आनुषङ्गिकतया स्वाभिमतपुमर्थांश्च जनयति । अतश्चानुषङ्गिकपुमर्थान् लिप्सुना शास्त्रतो भगवदभिप्राये जिज्ञास्यमाने तत्र भागवतकैङ्कर्यमभिमततमं विज्ञायते ॥

आराधनानामित्यादिप्रमाणप्रतिपन्नं भागवतकैङ्कर्यं अपत्योपलाळनमवनीपतिमिव भगवन्तं प्रीणयतीति तदत्र प्रधानम् । भगवान् भागवतशरीरकोऽप्याराध्यत इति तत्त्वविदां सम्मतम् । स च मम प्रियः, ज्ञानीत्वात्मैव मे मतमिति वदतः परमैकान्तिपरतन्त्रस्य भगवत आशये निरूप्यमाणे भागवतकैङ्कर्यं स्वान्तर्यामिसर्वविधेऽनुष्ठितं भवति । श्रिया समेतस्य भगवतः साक्षात् सर्वशेषित्वमद्वारकम्, भक्तात्मनस्तस्य सद्वारकं शेषित्वमित्याश्रयणात् कैङ्कर्यमपि सद्वारकं भवति । यथा स्वतन्त्रो राजा स्वधृतान्याभरणादीनि गजाश्वादीन् प्रापयति तथा भगवानपि स्वेष्टविनियोगार्हमेनं करोतीति भगवच्छेषत्वं भागवतशेषत्वपर्यन्तं भवति । तदिदं भागवतशेषत्वं स्वरूप-

उद्यानपत्रिका ।

प्रयुक्तं गुणज्ञानपूर्वकस्वेच्छाप्रयुक्तमिति द्विविधम् । एतच्च प्रभवो भगवद्भक्ता मादृशां सततं द्विज' इत्यत्र भगवद्भक्ताः मादृशामिति पदाभ्यामवगम्यते। इदं शेषत्वं क्रयार्हमिति कल्पसूत्रव्याख्यातारः कथयन्ति । शेषत्ववत् शेषवृत्तिरूपभागवतकैङ्कर्यमपिसद्वारकमद्वारकं च भवति ।

अतश्च साध्याकारविवृद्धिभूतस्य भागवतकैङ्कर्यस्य स्वशक्त्यनुरूपभगवत्कैङ्कर्यसीमभूमितया परिष्कृत्य तस्य संरक्षणं न्याय्यम् । वधूनामिव (पतिव्रताधर्म इव) परमैकान्तिनां पतिचित्तानुवर्तनं समुचितमेव । अस्यान्यशेषत्वस्य भगवच्छेषत्वज्ञानमूलकतया न विरुद्धत्वम् । एतादृशस्य भागवतशेषत्वस्य मुक्तदशायामप्यनुवर्तनेन स्वाभाविकत्वम् , भगवत्संबन्धज्ञानविशेषपूर्वकतया औपाधिकत्वञ्च भवति । द्वयोर्भागवतयोः परस्परं शेषित्वं शेषत्वं च उपकार्योपकारकत्वादिवन्न विरुद्ध्यते । अधिकार्यवस्थायां क्रियां प्रति शेषिण एव कर्तृत्वावस्थायां तां प्रति शेषत्वमप्यवगम्यते ॥

इत्थं चातिशयाधायकत्वेन उभयोश्शेषत्वं अतिशयभाक्त्वेन शेषित्वं च निर्बाधमुपपद्यते । भगवदिच्छया परस्परातिशयाधाने प्रवृत्तत्वात् भागवतशेषत्वसम्बन्धः प्रामाणिकः । गुणवशीकृतस्य स्वेच्छया भगवतीव भागवतविषयेऽङ्गीकृतं दासत्वं भोगवर्धकं सत्परमुत्कृष्यते । अत्र भगवान् स्वेच्छया सर्वेषां भागवतानां शेषित्वं प्रापयति । भगवदिच्छासहकृतोभयेच्छया भागवतशेषत्वं सिद्ध्यति । भगवदिच्छामात्रसिद्धमेकं शेषत्वम्, उभयेच्छासिद्धं शेषत्वमन्यदित्यपि विज्ञेयम् । शेषित्वं तु भगवदिच्छामात्रसिद्धमिति बोध्यम् । शेषभूतानामपि भगवदिच्छाधीनशेषित्वं न स्वरूपं विरुन्धे । स्वाभीष्टभागवतशेषत्वस्य , तत्फलभूतभागवतकैङ्कर्यस्य च सिद्ध्या उभावपि पुरुषार्थकाष्ठामभजताम् । उभावपि शेषशेषिणौ नियम्य (विरचय्य)अनुमोदनेन भगवानीश्वरत्वं भोक्तृत्वञ्चालभत । एवंप्रकारेण शेषत्वउद्यानपत्रिका ।

शेषित्वादिकं सर्वं भगवद्भाक्तृत्वशेषमिति विजानतां निर्दुष्टा पुरुषार्थकाष्ठा सिध्यति ।

इति निश्चिन्वतां सारविदां कृतकृत्यानामपराधरुचिः अतिशङ्का देवतान्तरसंस्पर्शः अन्याधीनभोगः आत्मार्थभोग इति दोषविवर्जितः परमैकान्तिनां प्रसाद एव स्वयंप्रयोजनतया अपेक्ष्यते ।

## १७. शास्त्रीयनियमनाधिकारः ॥

इत्थं शेषत्वसम्बन्धमूलकभगवद्भागवतकैङ्कर्यविषये अज्ञानमहान्धकारावृतस्य अस्य शास्त्रप्रदीप आवश्यक इति यथाशास्त्रं प्रवृत्तिः विकल्पिते विषये यथारुचि च प्रवृत्तिरुचिता ।

तथा हि—स्ववियोगदुःखितान् शिष्यानाहूय 'मा च यूयं मामनुमृपत । यद्यनुम्रियेध्वं । तर्हि श्रीयामुनेयश्रीपादाभ्यां शपे' इति वदन्मुमूर्षुः रामानुजमुनिः शोकार्तानामस्माकं का गतिरित्यनुपृच्छतः शिष्यानेवमशात्।

प्रपन्नस्यात्मयात्रा भगवदधीना । अतो न तदर्थं किमपि चिन्तनीयम् । यदि चिन्तयति तर्ह्यात्मसमर्पणमपि मुधा स्यात् । देहयात्रा तु कर्माधीना । अतो न तदर्थं खेत्तव्यम् । यदि खिद्यते तर्हि नास्तिक्यं स्यात् । अतो नोभयत्र कर्तव्यं किञ्चिदप्यस्ति । करणत्रयेण यथाकामचारितां स्वरूपानर्हां परिहरन् यावद्देहावसानं पञ्च कैङ्कर्याणि यथाशक्ति कुर्यात्— १. श्रीभाष्यप्रवचनम् , २. तदनर्हाणां दिव्यप्रबन्धानुसन्धानम् , ३. तत्राप्यनर्हाणां दिव्यक्षेत्रार्थदीपतैलनैवेद्यार्थतण्डुलादिसम्पादनम् , ४. तत्रानर्हाणां द्वयार्थानुसन्धानम् , ५. तदनर्हाणां श्रीवैष्णवाभिमानपात्रतासंरक्षणम् , इति ।

इत्थंभूतस्याधिकारिणः अवश्यावधातव्यास्त्रयः — अनुकूलाः उद्यानपालिका ।

प्रतिकूलाः अनुभय इति । तत्रानुकूलाः श्रीवैष्णवाः । प्रतिकूला भगवद्द्वेषिणः । अनुभये तु एतद्द्विकानन्तर्गताः संसारिणः । भोगसाधनचन्दनकुसुमादिवत् तापहरमलयानिलचन्द्रिकादिवत् भोग्यतमविषयादिवच्चानुकूलेषु वर्तितव्यम् । सर्पाग्न्यादिवत् प्रतिकूलेषु, काष्ठलोष्टादिवच्चानुभयेषु वर्तितव्यम् । इत्थं अनुकूलानां विषये ज्ञानसम्पत्प्रादुर्भावनम् , प्रतिकूलानां विषये सकृपमवस्थानञ्चावश्यकम् ।

अर्थकामप्रावण्यं हि एतत् विघटयति । अर्थकामवशात् सन्निधौ स्वापत्यमनाद्रियमाणान् नृपतिरिव श्रीवैष्णवमनाद्रियमाणानीश्वरो निगृह्णाति । अर्थकामानुरोधेन प्रतिकूलमाद्रियमाणेषु क्षुद्रेषु भिक्षमाणायां महिष्यां राज्ञ इव भगवतश्चित्तं विमुखीभवति । अनुभयानाद्रियमाणेषु रत्नपाषाणतारतम्यमविजानात्स्विव भगवत अनादर एव स्यात् इति ।

इत्थं भाष्यकृद्भिरुपदिष्टोत्तरकृत्ये 'कुलटाषण्डपतितवैरिभ्यः काकिणीमपि । उद्यतामपि गृह्णीयान्नापद्यपि कदाचन ॥' इत्यादिरीत्या धर्मविरुद्धयोरर्थकामयोर्दूरनिरस्तत्वात् तदविरुद्धार्थकामोपाधिकतयाऽपि अनुकूलप्रतिकूलानुभयेषु स्वीया स्थितिः न परिच्याव्येति तेषामाशयः । अनुकूलाननादर्तव्यानाह शाण्डिल्यः । प्रतिकूलसंसर्गस्त्याज्यः भगवत्प्रेमनाशकत्वादिति भारते कथ्यते । अनुभयेषां तृणवत्करणञ्च विहितं । एवं वर्तनस्य शास्त्रैकवेद्यतया शास्त्रीयोपलक्षणतया सारोद्धारेण श्रीभाष्यकारप्रोक्तेषु पञ्चस्वपि कैङ्कर्येषु शास्त्रीयो नियमः स्वीकार्य इति साधु सूचितम् । शास्त्रविरुद्धानां कर्मणां दैवप्रकृत्यनर्हतया यावच्छरीरसम्बन्धं शास्त्रीयं दास्यत्वमेव समुचितम् । प्रीत्यैव कारित इत्यत्र एवकारः साधनत्वबुद्धिं व्यवच्छिनत्तीति स्फुटम् । इत्थं शास्त्रीयनियमनं प्रपत्त्यध्याये प्रसिद्धम् । तन्नियमास्वीकारे दोषश्च जायमानः अस्य विमुक्तेः प्रागेवानिष्टं किञ्चन जनयति । सात्त्विकानां भगवदप्रीत्यभ्यधिको नरको नाम कोऽस्ति । निसर्गसुहृदो भगवतः अप्रीतिर-

रुन्तुदा तदीयानाम् । इयञ्च क्षमापणकर्माचरणेनापगच्छति । अक्षमापयितॄणां स्वामिनि प्रावण्यं मोक्षे रुचिश्च शङ्कनीयं स्यात् । एवं आज्ञातिलंघनस्य भगवत्प्रीतिविरोधितया विरोधिनिवृत्त्यनुसन्धानस्थले शास्त्रीयनियमनस्यानुसन्धानमावश्यकम् ।

इदञ्च अपूर्णोपायानां उपायपूर्तिविरोधिनं प्रशमय्य भगवत्प्रसादनं भवति पूर्णोपायानामतिलंघनहेतुकाप्रीतिमजनयत् भगवत्प्रीणनं भवति ।

'आज्ञानुज्ञाविभागेन द्विधा शास्त्रीयपद्धतिः ।
निग्रहानुदयायाद्याऽपरा तत्तत्फलाप्तये ॥
अनुज्ञया प्रवृत्तेऽपि क्रमकोपादिसंभवे ।
आज्ञातिक्रमदोषः स्यान्नियमोऽतो दुरत्ययः ॥

## 18 अपराधपरिहारः ।

इत्थं भगवच्छेषतैकस्वभावस्य शास्त्रनियतकैङ्कर्यैकरसस्याधिकारिणः अनापदि बुद्धिपूर्वापराधः प्रायेण न संभवेत् । प्रारब्धकर्मविशेषतः देशकालावस्थावैगुण्यहेतुकाः प्रामादिकाः सुषुप्त्याद्यवस्थासु जाताश्चापराधाः नाधिकारिणि श्लिष्येरन् । मा जनिषत मम बुद्धिपूर्वकाणि पापारम्भकाणि च पापानीति सङ्कल्प्य प्रपदनमनाचरतः प्रकृतिदोषपरिवेष्टितस्य बुद्धिपूर्वमपि जायमानाः स्वनिष्ठाविपरीताचाराः निसर्गसुहृदि श्रीपतौ रक्षणोन्मुखे सति विद्युत इव यद्यपि नातिचिरं स्थातुं प्रभवन्ति तथाऽपि लज्जानुतापादिविशिष्टस्य तादृशापराधपरिहाराय यथाधिकारं प्रायश्चित्तानुष्ठानं तिष्ठत्येव । प्रारब्धवशेनाकृतक्षमापणोपायानां कठिनप्रकृतीनां यमविषयगमनादिवर्जं काणत्वखञ्जत्वादिप्रापणेन क्षमानिधिः स भगवान् अल्पीयसा दंडनेन काकादिवत् तान्निरपराधान् करोति । युक्तमेवेदम् । अन्तःपुरचारिणां कुब्जवामनादीनां अन्तरङ्गत्वतारतम्यानुनरोधेन पराङ्मुखत्वनिवा-

रणासंभाषणादिकमेवाचरन् तदपराधानां गणं सहमानो दृश्यते खलु महाराजः । अत एव किल प्रपत्तिमाहात्म्यवादिनः लघुदण्डत्वमनुसन्धायैव मृदुप्रकृतीनां क्षमापणकर्मानुष्ठापनमिव , कठिनप्रकृतीनां दण्डविधानमिव च बुद्धिपूर्वोत्तराघस्यापि क्षमणमनुष्ठितायाः प्रपत्तेर्वैभवेनोपपन्नामिति केचन वदन्ति । प्रारब्धेषु पापांश इव अकृतप्रायश्चित्तस्य बुद्धिपूर्वोत्तराघं फलं जनयदपि न मोक्षं प्रतिबध्नीयात् । किन्तु रामठानुलिप्तवृक्षाणां म्लानतायां स्थलादिविशेषानुरोधेन कालतारतम्यमिव निःशेषसंसारनिवृत्तेः विलम्बे केवलं वैषम्यं भवति । एतद्देहावसाने मोक्षं कांक्षतामप्यनियतायुषामायुर्वृद्ध्या विलम्बो जायेत । नियतायुष्काणामायुरन्ते फलं भवति । प्रपत्त्युत्तरं राक्षसीनां बुद्धिपूर्वोत्तरापचारेऽपि क्रुद्धहनूमद्दर्शनजनितभीतिरूपो दण्डः सिद्ध्यतीति न न्यूनता । अतश्च बुद्धिपूर्वोत्तराघेऽपि क्षमापणं न विधेयम् , तदभावेऽपि शिक्षारूपदण्डविशेषो न । विलम्बाक्षमाणामपि परमे फले विळम्बो न , प्रारब्धसुकृतविशेषाधीनभगवत्कैङ्कर्यस्य विच्छेदः सङ्कोचो वा नेति पक्षाः शरण्यगुणान् शरणागतिवैभवञ्च स्तोतुमेव प्रवृत्ता इति सांप्रतम् । अन्यथा प्रपन्नानामनुष्ठानविशेषस्य , प्रपन्नानां विषये प्रायश्चित्तविधायकवचनानां अनिर्दिष्टकालानां विषये विलम्बविधायकवचनस्य च व्याकोपः स्यात् । वचनविशेषानुरोधेन प्रपत्त्यन्तरमेव तेषां विषये प्रायश्चित्तं भवति । बुद्धिपूर्वोत्तराघपरिहारमप्युद्दिश्य पूर्वमेव प्रपत्त्यनुष्ठानविधायिनि वचने सत्येव किल तदितरविषयतया प्रायश्चित्तप्रपत्तिविधानं नियन्तुं शक्येत ? । अतः प्रायश्चित्तप्रपदनविधायिनो वचनस्य बुद्धिपूर्वोत्तराघपरिहारार्थप्रपदनाननुष्ठातृविषयकतया नियमनं न युज्यते । प्रपदेः बुद्धिपूर्वोत्तराघपरिहारार्थता यदि विज्ञायते तर्हि तादृशं लाघवं न कोऽपि जह्यादिति पुनः प्रपत्तिविधायकं वचनं निर्विषयं स्यात् । न हि सामान्यवचनेन विशेषवचनं बाध्येत । यद्येवं विशेषवचनं बाध्येत तर्हि उपासकस्यापि

बुद्धिपूर्वोत्तराघे दोषो न स्यात् । बुद्धिपूर्वोत्तराघवतामपि यमवश्यतादिदोषो नेति प्रमाणसिद्धम् । एकरूपस्य पापस्य जातिगुणाद्यधिकारभेदेन गुरुलघुफलभेदवत्त्वं सर्वसंप्रतिपन्नम् । इत्थञ्च —

'न प्राग्वत् बुद्धिपूर्वाघे न चात्यन्तमनुग्रहः ।
लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत् ॥'

अतः प्रपन्नस्य लघुदण्डनिवारणाय पुनः प्रपदनं विधीयते । शिष्टतया व्यपदिष्टानां प्रसिद्धेषु निमित्तेषु यथाशक्ति प्रसिद्धप्रायश्चित्तानुष्ठानमेव लोकसंग्रहानुरोधेन समुचितम् । तथाविधप्रायश्चित्ताकरणं च तेषामपराधं जनयति । आज्ञातिलंघनं च, सैरन्ध्रयाः सेवातिलंघनमिव तादात्त्विकपरिमलाननुभवं भीतिं च, अमीषां द्विविधमनर्थमादधाति ।

ननु वचनाभावेऽपि स्वेच्छया बुद्धिपूर्वोत्तराघपरिहारार्थमपि कुतो न प्रपदनं स्यादिति चेत् तत् तादृगुत्तराघपरिहारार्थं उपासनं अङ्गप्रपत्तिर्वा कुतो नानुष्ठीयतामिति प्रतिबन्द्या निरस्तम् । इष्टापत्तौ च भाष्यादिविरोधः । उषस्तिप्रभृतीनां ब्रह्मविदामनुष्ठानस्य च विरुद्धमिदम् । निमित्तानन्तरमेव नैमित्तिकमनुष्ठातव्यमिति न्यायः न बुद्धिपूर्वोत्तराघविषयं बाधितुं शक्यते । अतश्चागामिबुद्धिपूर्वपापेभ्यो बिभ्यताऽधिकारिणा तत्कारणभूतप्रारब्धपापपरिहाराय प्रपदनरूपं प्रायश्चित्तं कर्तव्यम् । प्रपत्त्या जपहोमार्चनादिभिश्च प्रारब्धपापनाशः कथ्यमान उपपद्यते । पापारम्भकपापपरीहारायाप्यनुष्ठितप्रपदनस्य बुद्धिपूर्वं पापं नोदयेत ।

अत्यन्तभगवदन्तरङ्गभूतानामपि सात्त्विकापराधलेशः प्रत्यवायकर इति शाण्डिलीवृत्तान्तादौ प्रसिद्धम् । भगवानिव सूरयोऽपि स्वेच्छयावतीर्णाः कर्मवश्यतामाभिनयन्तः लोकहितप्रवर्तनार्थं अपचारपरीहारादीननुतिष्ठन्ति । अतश्च भगवत्प्रीतेरहानाय, पुनः प्रपत्तेः लघुदण्डस्य वा

अप्रसङ्गाय उत्तराघनिर्मूलने यत्नवता भाव्यम् । अत्र सर्वेषामपराधानां निदानमविवेकः । तत्र प्रधानीभवति अचित्स्वभावजाड्यविकारादीन् ईश्वरस्वभावस्वनिष्ठत्वस्वातन्त्र्यानन्यार्थत्वादींश्च परिकल्पयन्नविवेकः । एतादृशमविवेकं छेत्तुमसिर्भवति अन्यूनानतिरिक्तमात्मनि जातं निस्संशयं तत्त्वज्ञानम् । इत्थं सर्वमूलभूतस्य फलप्रदानोन्मुखस्य पूर्वाघस्य निवर्तनार्थमपि पूर्वमेव प्रपत्तिं विशिष्य प्रायश्चित्तभूतपुनःप्रपत्तिञ्चानुतिष्ठतां न कोऽपि दोषः । एवं परिहार्येषु अपराधेषु राजदारापराधवत् प्रधानीभवति भागवतापचारः । अतश्च जातिगुणादिभिरुत्कृष्टानां शुकशौनकादीनां न्यस्तभरस्य स्वस्य च तुल्येऽपि भागवतत्वे भगवत्सङ्कल्पविशेषप्रयुक्ते, तत्तदुपाधिस्वभावसिद्धोत्कर्षापकर्षयोः तिरस्कारप्रयोजकतया अस्वीकरणम्, 'अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्' इति न्यायेन जात्याद्युपाधिमूलकविधिनिषेधव्यवस्थायां सत्यामपि अन्यूनप्रतिपत्तिपरिपालनम् , एतादृशेषु प्रतिपत्त्यैव कैङ्कर्याचरणसम्पादनं चावश्यकम् । यद्युक्तेषु कर्मसु परिस्खलति तर्हि स लक्ष्मणसुग्रीवयोः संवादं साधु विमृश्य क्षमापणविशेषेण पराविदितपरिस्खलनं वर्तेत ।

विशेषज्ञस्य बुद्धिपूर्वं प्रातिकूल्यमाचरतोऽपि अपराधं पुनः प्रपत्त्या भगवान् क्षाम्यतीति बदरिकाश्रमे रुद्रानुष्ठानेन विज्ञायते । अद्य सापराधः निरपराधो वा जन्मान्तरदुष्कृतानुरोधेन भागवतैर्विगर्ह्यमाणः, तेषां क्षमापणोपायाचरणेन भगवन्तं प्रसादयेदिति वैष्णवलक्षणाभिधायकप्रमाणैर्विज्ञायते । एवं भगवन्तमप्रसादयतस्तु भगवदभिमानविषयत्वम् , भागवतशेषत्वं स्वभावभूतशमादयश्च हीयेरन् । एवंभूतगुणविशेषाणां हानिरेवास्य वधः दण्डश्च भवति । भगवदभिमानबाह्यतायाःकौर्यं भक्ताङ्घ्रिरेणुः साधुन्यरूपयत् ।

## 19 स्थानविशेषः ॥

इत्थं निरपराधानकूलवृत्तौ रुचिमान् परमैकान्ती आर्यावर्तादीनां

पुण्यदेशानां युगस्वभावप्राप्तां वैयाकुलीं साधु निरूप्य चातुर्वर्ण्यप्रतिष्ठावति स्ववृत्त्यनुगुणे देशे निवसेत् । तत्रापि परमभागवतनिवासपावनः प्रदेशः परमैकान्तिनः साधीयान् ।

'कलौ खलु भविष्यन्ति नारायणपरायणाः'

इत्युपक्रम्य भागवतपरिग्रहविषया देशाः कथिताः । अत एव देवै ऋषिभिश्च पृष्टो भगवान्

'यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा ।
हिंसा च धर्मसंयुक्ता प्रचरेयुः सुरोत्तमाः ॥
स वै देशो हि वः सेव्यो मा वोऽधर्मः पदा स्पृशेत् ।'

इति प्रत्याह । उक्तगुणान्वितेष्वपि भागवतपरिगृहीते कस्मिंश्चित् स्वकैङ्कर्यसमुचिते देशे निवासः प्रशस्यते । भाष्यकारोऽपि 'अत्रैव श्रीरङ्गे सुखमास्व' इति सत्त्वोत्तरभगवत्क्षेत्राणां प्रदर्शनाय श्रीरङ्गमादितः कथयति । भगवत्क्षेत्रमेव विवेकिनां वासार्हमिति व्यासवाल्मीकिप्रभृतयः न्यरूपयन् । श्रीसात्त्वतादयोऽपि क्षेत्रविशेषान् तत्सीमां, तत्र देहं न्यस्यतां विशेषं च प्रतिपादयन्ति । अतः शक्यं कैङ्कर्यमाचरन् भगवद्भागवताभिमानविषये सत्त्वोत्तरे देशे निवसेत् । गत्यन्तराभावे तु यस्मिन् कस्मिंश्चित् देशे निवसतु । एतद्वासेन किल तदपि पवित्रं भवति । अत्र च शाण्डिलीवृत्तान्तः सञ्चिन्त्यतामुदाहरणतया । शरीरपातस्य देशविशेषनियमो नेति वचनं फलस्यान्यूनतां गर्भीकरोति ।

## 20 निर्याणम् ॥

एवं भगवतः पादाववलम्बमानं प्रपन्नं हस्तेनावलम्ब्य भगवानुभयविभूतिनाथः अभिषिक्तां महिषीमिव सबहुमानं कांक्षिते परमे पदे प्रति-

ष्ठापयितुमिच्छति । तत्र प्रारब्धदुष्कृतविशेषवैचित्र्यमूलकाहङ्कारममकारौ तन्मूलकानपचारान्; प्रयोजनान्तररुचिम्, तन्मूलतया सम्भावितं देवतान्तरसंस्पर्शम्, बुद्धिदौर्बल्यम्, तन्मूलकोपायान्तरप्रत्याशां च भजतामधिकारिणां, एवंविधवैपरीत्यगन्धाविधुराणां, प्रारब्धसुकृतविशेषेण पूर्वप्रपत्तौ फलसङ्कल्पविशेषेण च अच्छिद्रकैङ्कर्यानुष्ठानप्रतिष्ठावतामधिकारिणां च संसृतिपथान्निर्याणे विळम्बाविळम्बव्यवस्था ह्यत्र प्रदर्श्यते । एतेषामहङ्कारममकारौ चार्वाकादीनामिव न स्थिरौ भवतः । गच्छतां स्खलनमिव जातुचिज्जातावपि तौ पश्चात्तनेन विवेकेन विनश्यतः । जातानामप्यपराधानां क्षमापणावधित्वं शिक्षावधित्वं च प्रागेवाभ्यधायि । कालमनिर्दिश्य उपायमनुतिष्ठतां विषये

'तनूकृत्याखिलं पापं मामाप्नोति नरः शनैः ।'

इति वचनं चरितार्थम् । मुमुक्षूणामेषां प्रयोजनान्तररुचिः न स्थिरा स्यात् । उभयभावनावतामिवामीषां मोक्षेण सह प्रयोजनान्तरेऽपेक्ष्यमाणेऽपि हितपरः स भगवान् कुण्डधरोपाख्यानोक्तविधया कानिचित् प्रयोजनान्यददानः अल्पास्थिरत्वादिविवेकेन तेषुचिदरुचिमुत्पादयन् सौभरिकुचेलादीनामिव कतिपयभोगप्रदानेनोद्वेगं च जनयतीति कालविशेषं निर्दिश्य प्रपन्नानां तावत्येव समये प्रयोजनान्तरवैमुख्यं जायेत । अन्येषां तु वैराग्यावधिः विळम्बः स्यादेव । प्रयोजनान्तरानुरोधेन जायमानमपि देवतान्तरस्पर्शं परमैकान्तिसम्बन्धमाहिमजनितलज्जावधिकं परिकल्प्य स भगवानात्मनि प्रवणयति । स्थिरे सति देवतान्तरस्पर्शे पूर्वमुपायस्पर्शो न । उपरि च नरकाद्यनुभवोऽपीति ज्ञायताम् । भगवति कृता प्रपत्तिस्तु कदाचिदुपायं निष्पाद्य स्वयं चरितार्था भवेत् । परिपूर्णमहाविश्वासेनोपायमनुतिष्ठतां बुद्धिदौर्बल्यमुपायान्तरप्रत्याशा च न जातु जायेत । यदि जायते तेषां विश्वासो मन्द एव न महान् । मन्दविश्वासानामेषामपि महाविश्वासमुत्पाद्य पूर्णप्रपत्तिनिष्ठां जन-

यति । एवमादिवैपरीत्यरहितानां विळम्बादिशङ्काऽपि न । किन्तु एतेषां इच्छावधिको विळम्बः । मोक्षश्चोद्दिष्टे समये सिद्ध्यति । एष च भगवतः सदाऽभिमतोऽधिकारी । अमुष्य विषये सत्यसङ्कल्पः स भगवान् सद्वारकप्रपत्तिनिष्ठस्योपायप्रारम्भ इव प्रपत्तिवाक्योच्चारणप्रथमक्षण एव सर्वभयकारणभूतं निग्रहसङ्कल्पं शमयित्वा, एतस्य एतदनुबन्धिनां च नित्यसूरिपरिषत्प्रवेशनेऽपि अपूर्यमाणेन श्रद्धातिशयेन आश्रितापराधराशीन् अन्तःकुक्षिकोणमवस्थाप्यानुबन्धिनां बुद्धिपूर्वापराधस्यानुतापादिनिर्वार्यताप्रयोजकमनुग्रहं सङ्कल्प्य एतदपेक्षितविळम्बे स्वयं सानुशयः त्वरितश्च कस्यापि त्वरामुत्पाद्य स्वाभिप्रायानुरोधं प्रारब्धशरीरावसान एव तेन परमप्राप्तिं प्रार्थ्यमानः, बन्धकयोः पुण्यपापयोः तदभ्युपगतातिरिक्तांशे सम्बन्धमस्य निरस्य शरीरपातसमये प्राप्ते प्रियेषु सुकृतमप्रियेषु दुष्कृतं च संक्रमय्य दिवाशुक्लपक्षादिप्राशस्त्यस्य फलान्तरासक्तविषयकतया मोक्षोपायपूर्तिरहितविषयकतया च व्यवस्थापितत्वेन कालनियमं मरणस्य निराकृत्य मनुष्यपितृदेवानामह्नि रात्रौ वा स्वसङ्कल्पितसमये अप्रच्युतपूर्वसंस्कारमनोरथमेनं विधाय तत्कालोपस्थितयत्किञ्चिच्छरीरविश्लेषनिमित्तमुत्पाद्य वागादीनि दश बाह्येन्द्रियाणि मनसा, तथाभूतं मनश्च प्राणेन, प्राणञ्च जीवेन, जीवञ्च त्रिस्थूणक्षोभदशायां स्थूलदेहमन्थनजनितेन पञ्चभूतसूक्ष्मेण संयोज्य तादृशं जीवं हार्दभूतस्य स्वस्य सविधे विश्रमय्य एवंभूतविद्वदविद्वत्साधारणोत्क्रान्त्यनन्तरं स्वर्गनरकप्रापकमार्गान्तरमुखभूतनाडीविशेषेष्वप्रवेश्य अर्चिरादिमार्गमुखभूतशताधिकब्रह्मनाड्यां प्रवेश्य सूर्यकरावलम्बनपूर्वं प्रस्थापयति । एवंभूतस्य प्रपन्नस्यान्तिमस्मृतिर्नावश्यिका । अत एव भगवान् भाष्यकारः मुमूर्षोः श्रीवत्साङ्कमिश्रस्य श्रोत्रे द्वयमुच्चार्य खिन्नान् तत्सविधवर्तिनः प्रति इदमुपायपरिकरतया नोक्तम्, किन्तु खण्डशर्करावत् भोग्यतया इति प्राह । केचित् अन्तिमस्मृतिमपि उपायफलं विवक्षित्वा प्रपन्नानामन्तिमस्मृतिरवश्यं भवेदिति वदन्ति । अत एव

गद्ये अप्रच्युतपूर्वसंस्कारमनोरथ इति कथनमुपपन्नम् । उपायभूतान्तिमस्मृतिर्नावश्यिकी । सा च स्वयं न साध्या । अत एव मदीययैव दययेति गद्यस्थं वाक्यमुपपद्यते । अन्तिमस्मृतिर्नाम वागादिषूपशान्तेषु उपशममनापन्ने मनसि जायमाना स्मृतिः । नेयं सविधगतैरीक्षितुं शक्या । दृश्यते हि वागिन्द्रियोपरमेऽपि मनःप्रवृत्तिरिति भाष्यं तु लिङ्गविधया, व्याध्याद्यवस्थासु अनुभूतदर्शनविधया वा नेयम् । अतश्च मुच्यमानस्य मोक्षदातुश्चान्तिमस्मृतिः ज्ञानविषयः । इतः परं हार्दविश्रमणावधि सुषुप्तितुल्या स्थितिः । 'काष्ठपाषाणसन्निभं नष्टस्मृति'रित्यादिकमिमामेवावस्थामवबोधयति । ततः परं लब्धज्ञानः तत्प्रकाशितद्वारः ब्रह्मनाडीं प्रविश्य उत्तरकालं यावत् अहरेवाभिनिष्पद्यत इति ।

---

## 21. गतिच्चिन्तनम् ।

इत्थं मूर्धनाड्यां प्रवेशितं मुमुक्षुं स्थूलशरीररूपाद्ब्रह्मपुरात् ब्रह्मनाडीद्वारेण समादाय प्रस्थितोऽतिवत्सलो हार्दः देवयानमार्गं नीत्वा अर्चिषा, अह्ना, पूर्वपक्षेण, उत्तरायणेन, संवत्सरेण, वायुना, आदित्येन, चन्द्रेण, अमानवसंज्ञकवैद्युतेन, तत्सहकारिभिर्वरुणेन्द्रप्रजापतिभिस्स्वप्रधानैर्मार्गदर्शकैस्तत्तत्सीमसूचितार्हणाभिरनुभावितभोगः कांक्षितं देशविशेषमुपगमय्य, कर्मफलभोगार्थतारहितं विद्यया स्थापितं गत्युपयोगि सूक्ष्मशरीरं, निस्तीर्णनदीकं उडुपमिव, परित्याज्य, विरजायाः पारं प्रापय्य, दत्वा चाप्राकृतं शरीरं, निकषा ऐरम्मदीयं सरः, सोमसवननामानमश्वत्थं प्रापय्य, मालाञ्जनचूर्णवासःपणत्रहस्ताभिः पञ्चशत्या अप्सरोभिः प्रत्युद्गतं ब्रह्मालङ्कारेणालंकृतं च कारयित्वा, ब्रह्मगन्धरसतेजांस्यनुप्रवेशितं नित्यसूरिषु सम्मुखीनेषु, इन्द्रप्रजापतिनाम्नोर्गोपुररक्षकयोः सविधमनुप्रेष्य अप्राकृतराजोपचाराननुभाव्य, निरतिशयभोग्ययोः स्वपादाम्बुजयोः मूले निवेश्य, समानभोगत्वलक्षणसायुज्यवत्तां

सूरिणां परिषदमनुप्रवेश्य, समस्तप्रतिबन्धकनिवृत्तिपूर्वकं स्वस्वरूपाविर्भावपूर्वकं देशकालावस्थासङ्कोचरहितं मनोरथानुगुणं च कार्यं तदीयं सर्वविधमपि कैङ्कर्यं यावदात्मभावि विधाय ऐकान्तिकात्यन्तिकनित्याकिङ्करतानुभवेन निरतिशयानन्दभाजमेनं करोति स भगवान् । वस्वादिपदप्राप्तिपूर्वकमोक्षसाधनभूतमधुविद्यादिनिष्ठानां, पाञ्चरात्राधिकरणप्रोक्ताधिकारिविशेषनियतक्रममुक्तिभाजां, सत्यलोकान्मोक्षं भजतां च गतिविशेषास्तत्तदधिकारिभिरेव ज्ञातव्याः, प्रकृते नातीवोपयुज्यन्ते चेति उपेक्षिताः । यद्यप्युपासकस्येव गत्यनुसन्धानादयः प्रपन्नस्याङ्गतया न विहिताः; तथापि स्वाधिकारिताप्रयोजकफलार्थितया आवश्यकतया फलपर्वविशेषानुसन्धानमपि तत्रानुप्रविशति । गतिचिन्तनं चेदं भाविनो भावुकस्य वासरपरिगणनमिव ईप्सितपुरुषार्थमहिम्ना प्रीत्यतिशयमुत्पादयत् स्वयंप्रयोजनीभवति । अतः स्थूलतोऽपि गतिचिन्तनमपेक्षितं भवति ।

---

## 22. परिपूर्णब्रह्मानुभवः ॥

इत्थं अध्वविशेषेण गतः सर्वदेशसर्वकालसर्वावस्थासु निरतिशयभोग्यं अनन्तगुणविग्रहविभूतिविशिष्टं सर्वेश्वरं भगवन्तं परिपूर्णमनुभवति । एवमनुभवस्य तौल्येन जीवेश्वरयोः परमं साम्यमुच्यमानमुपपद्यते । यथा प्रियतमे राजनि भोग्यभूते तदुपकरणेषु तन्महिम्ना भोग्यत्वं तथा भोग्यभूते सति ब्रह्मणि तद्भोगोचितभोगोपकरणभोगस्थानादिषु भगवत्स्वरूपानुबन्धिषु भोग्यता न हीयते । सर्वप्रकारविशिष्टः स भगवान् भोग्यभूत इति भूमाधिकरणे प्रपञ्चितम् ।

अत्र परमपदशब्दः निरतिशयानुकूलतया परमप्राप्यत्वेन भगवत्स्वरूपमभिधत्ते । स्थानविशेष एव तथाविधपरिपूर्णानुभवात् तदपि स्थानं परमपदशब्दः बोधयति । एवमनुभवाश्रयः भगवद्विभूतिभूतः ज्ञानानन्दलक्षणः

स्वात्माऽपि परमपदशब्देनोच्यते । अमीषां त्रयाणां कालशुद्ध-सत्त्वयोश्च प्राप्यत्वं केवलमविशिष्टम् ।

ननु प्रतिकूलतया प्रत्यक्षसिद्धेषु मुमुक्षोस्त्याज्यतया विहितेषु लीला-विभूतिस्थपदार्थेषु कथं भोग्यता जायतामिति चेत् न । प्रशान्तपित्तस्य पयसीव प्रशान्तकोपेन राज्ञा विमोचितस्य कुमारस्य कारायामिव च प्रशान्त-कर्मपरीवाहस्य समुपजातनिरन्तरभगवदनुभवस्य लीलाविभूतिस्थेषु पदार्थेषु भोग्यता नैव हीयते । बद्धदशायां प्रतिकूला अल्पानुकूलाश्च पदार्थाः कर्मबन्धरहितावस्थायां भगवदिच्छातो भोग्या भवन्ति । इत्थमनुकूल-स्वभावः सर्वप्रकारविशिष्टो भगवान् नारायणः द्वये अष्टाक्षरे च चतुर्थ्या प्राप्यतया अवगम्यते । तथाविधभगवत्कैङ्कर्यं च परिपूर्णानुभवजन्यप्रीति-विशेषस्य परीवाह इति सुस्पष्टं गद्येऽभिहितम् । मुक्तदशायां श्रुतं जक्षणादि ज्ञात्यादिसम्पादनं च कर्मनिरपेक्षभगवदिच्छानुगुणस्वेच्छामूलतया निरुक्तकैङ्कर्य एवान्तर्भवति । अयमनुभव उत्तरावधिरहितः सदा वर्तते । इत्थं भगवत्कैङ्कर्यान्तर्गतस्वच्छन्दविहारेण लीलाविभूतिमनुप्रविशतामपि तथाविधानुभवस्यासङ्कोचात् अपुनरावृत्तित्वं युज्यते । इत्थमनुभवं लप्स्य-मानानामन्तिमं शरीरमेवञ्जातीयकमिति न निश्चेतुं शक्यते । ब्रह्मादय इव धर्मव्याधादयोऽपि मोक्षं लभन्ते । इत्थं च मुमुक्षुदशायां विद्यमानमुत्क-र्षादिकं मुक्तदशायामप्यनुभवतारतम्यं जनयतीति वदन्त आनन्दतीर्थीयाः ब्रह्मणा विपश्चिता सह मुक्तानां परमसाम्यं प्रतिपादयन्तीं श्रुतिं विसस्मरुरिव । आचारवैकल्यानुगुणः आनन्दह्रास इति वचनस्यासत्त्वेऽपि देशविशेषप्राप्ति-प्राक्कालिकभगवदनुभवपरतया समर्थनं न्याय्यम् । कालतारतम्यमेव पूर्वा-परमुक्तानाम् ; न भोगे ह्रासः । श्रीविष्णुलोकादिषु सालोक्यसारूप्यमा-त्रभाजां मुक्तत्वव्यपदेशः अदूरविप्रकर्षाद्भवति । परमे पदे लभ्य-मानसायुज्यमेव मोक्षपदार्थः । शते पञ्चाशन्न्यायेन सालोक्यादीनां

तदन्तर्भूतत्वात्तत्र न वैषम्यं कस्यापि । एकभोग्यपदार्थनिरूपितभोक्तृत्वमेव सायुज्यपदेनोच्यते । इह च सप्रकारकब्रह्मरूपे भोग्ये ब्रह्मणा सह मुक्तस्यापि भोक्तृत्वान्वयाविशेषात् सायुक्त्वमुपपद्यते । तारतम्यराहितभोगवत्त्वं सार्ष्टिताशब्देनोच्यते इति न सायुज्यसार्ष्टिताशब्दयोरेकत्र प्रयोगे विरोधः । मुक्तस्य जगद्व्यापारसम्बन्धाभावेऽपि पितृकृषिफलं पुत्रस्येव जगद्व्यापाररसः विधातुः ब्रह्मणः पश्यतां मुक्तानां च तुल्य एव भवति । अत एव 'जगद्व्यापारवर्ज' 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रकार आह । सायुज्यपदस्य ऐक्यमर्थ इति वदतां मते सामरस्यं हि सायुज्यमिति शाकटायनवचनं भेदश्रुतयश्च विरुद्ध्येरन् । 'मम साधर्म्यमागताः' इति हि गीताचार्यः प्राह मुक्तोऽकर्मवश्यतया स्वतन्त्रः कथ्यते । इत्थं श्रुतिसूत्रादिषु साम्यस्य कण्ठत उक्तत्वेन मुक्तदशायां प्रतिपादितमैक्यं रामसुग्रीवयोरैक्यमित्यादाविव भेदश्रुत्यविरोधेन निर्वाह्यम् । अन्यथा प्रमाणसहस्रं विरुद्ध्येत । अतश्च ज्ञानभोगादिषु मुक्तस्य परमसाम्यमेव वर्तते। ईश्वरस्य जगत्कारणत्वमोक्षप्रदत्वसर्वव्याप्तत्वज्ञानानन्दस्वरूपत्वलक्ष्मीसहायत्वादीनि प्रतिनियतानि । मुक्तानां आधेयत्वविधेयत्वशेषत्वाणुत्वादीनि व्यवस्थितानि । नन्वेवं तर्हि अस्वतन्त्राणां मुक्तानां पुनरावृत्तिशङ्का कुतो न स्यादिति चेत् इत्थम्—

किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः ।

इति भगवद्वचनात् , मुक्तैः सर्वस्यापि ब्रह्मात्मकतया दर्शनेन केवलचिदचिदनुभवस्याप्रसङ्गात् , केवलचिदचिदनुभवे दोषस्य प्रत्यक्षितत्वाच्च न स्वेच्छया पुनरावृत्तिशङ्का जायेत । मुक्तदशायां धर्मभूतज्ञानस्य विच्छेदसङ्कोचयोरभावेन विकस्वरतया अज्ञानमूलकावृत्तिशङ्काऽपि न । भगवद्विषयवैलक्षण्यज्ञानतो जातं भक्तिशब्दवाच्यं ज्ञानं सर्वविधभगवद्वैलक्षण्यस्य प्रत्यक्षितत्वेन निरतिशयप्रीतिरूपं पर्यवस्यति । तथाविधप्रीत्यतिशयस्य

भगवताऽप्यपरिच्छेद्यतया अप्रतिबद्धप्रसरणवत्त्वं स्फुटम् । अतश्च भगवत्स्वातन्त्र्यप्रयुक्ताऽपि पुनरावृत्तिशङ्का न सम्भावनार्हा । मुक्तदशायां शास्त्रवश्यताधिकाराभावेन आज्ञातिलंघनाभावात् भगवदभिमतातिरिक्तस्वाभिमताभावेन विपरीतानुष्ठानराहित्याच्च कैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवरूपमोक्षपुरुषार्थः उपरि च यावदात्मभावी भवति । सर्वमिदमभिप्रेत्य भगवान् सूत्रकारः 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दादि'त्याह ।

श्रीनिवासयतीशानपदाम्बुजरजःकणः ।
जडभूतामिमं तूर्णं चेतनीकुरुते हठात् ॥

इति श्रीमद्रहस्यत्रयसार संग्रहे
अर्थानुशासनभागः प्रथमः ।

